श्रीहरिकृष्णनिबन्धमणिमालायाः
द्वितीयो मणिः ।

महाकविकालिदासप्रणीतः

# श्रुतबोधः

श्रीसीतारामझाकृत-सविशेषाऽऽशुबोधिनीसहितः ।

प्रकाशकः—
श्रीहरिकृष्णनिबन्धभवनम्
बनारस-सिटी ।

श्रीगोकुलेश्वरप्रीत्यै तदीयजननोत्सवे ।
श्रीहरिकृष्णदासेन सदानन्दाभिलाषिणा ॥
विक्रमीय-युगवसुनवेन्दुमितशरदि सुतारे
स्थापितमिह शुभसहसि शुक्ल इनतिथिगुरुवारे ।
श्रीहरिकृष्णनिबन्धभवनमिति मणिमालाया
ग्रन्थनाय बुधजनविनोदमतिमङ्गलदायाः ॥

श्रीहरिकृष्णनिबन्धमणिमालायाः द्वितीयो मणिः



महाकवि-कालिदासप्रणीतः

# श्रुतबोधः ।

चौगमानिवासि-काशीस्थ-संन्यासिसंस्कृतपाठशालाध्यापक-
ज्यौतिषाचार्य-मैथिलकवि-
श्रीसीतारामशर्मकृतया
आशुबोधिनीसमाख्यव्याख्यया तत्कृतसंक्षिप्तच्छन्दोगणितादिना च
सहितः ।





काशीस्थ-
श्रीहरिकृष्णनिबन्धभवनद्वारा
प्रकाशितः ।



संवत् १९८५ ।

# परीक्षापाठ्य-पुस्तक-सूची—

| | | मूल्यम् |
|---|---|---|
| (१) | सरलत्रिकोणमिति-चापीयत्रिकोणगणिते—सविशेषवासनासहिते—द्वियुकपदसिद्धान्त-लघुरिक्थादि-नवीनसिद्धान्त-प्रश्नादिसहिते | रु० आ० ३—० |
| (२) | नीलाम्बरीयगोलीयरेखागणितम्—नूतनवासनया, गोलबोधेन च समन्वितम् | ०—१२ |
| (३) | मुहूर्तचिन्तामणिः—पीयूषधारासहितः-नूतनगणितविषयोपपत्त्यादि-टिप्पणीसहितः | ३—० |
| (४) | मुहूर्तचिन्तामणिः—प्रमिताक्षरासहितः-नवीनगणितविषयोपपत्त्यादि-टिप्पणीसहितः | २—० |
| (५) | बृहज्जातकम्—भट्टोत्पलीयटीकासहितम् नवीनगणितविषयोपपत्त्यादि-टिप्पणीसहितम् | २—० |
| (६) | ताजिकनीलकण्ठी—विश्वनाथीयटीकोदाहरणसहिता—गणितविषयोपपत्त्यादिटिप्पणीविभूषिता | १—४ |
| (७) | शिशुबोधः—सविशेषटिप्पणीसहितः | ०—३ |
| (८) | रेखागणितस्यैकादश-द्वादशाध्यायौ—ज्योतिर्विद्वर-श्रीकृष्णदत्तशर्मकृतटीकासहितौ सविशेषटिप्पणीसमलङ्कृतौ | ०—१२ |
| (९) | नाह्लिदत्तपञ्चविंशतिका | ०—१ |
| (१०) | प्रतिभाबोधकम्—संस्कृतटीकासहितम् | ०—८ |
| (११) | मूलरामायणम्—अन्वय-व्याख्या-समास-व्याकरण-वाच्यपरिवर्तन-कोश-सारार्थ-भाषार्थ-प्रश्नादिसहितम् | ०—८ |
| (१२) | मुद्राराक्षसनाटकम्—भावबोधिनीटीका-विस्तृतसमालोचनासहितम् | २—० |
| (१३) | शिशुपालवधं सटीकम्—आदितः सर्गद्वयात्मकम् | ०—६ |
| (१४) | शिशुपालवधं सटीकम्—आदितः सर्गत्रयात्मकम् | ०—८ |
| (१५) | फक्किकारत्नमञ्जूषा—(स्त्रीप्रत्ययान्तोभागः) | २—० |
| (१६) | फक्किकारत्नमञ्जूषा—कारकादिकृदन्तान्तोभागः | २—० |
| (१७) | उभयाभावादिवारकपरिष्कारः—(सटीकः) | ०—१२ |

विविधपुस्तकप्राप्तिस्थानम्—

**श्रीहरिकृष्णनिबन्धभवनम्,**
**बनारस-सिटी ।**

# भूमिका

शब्दशास्त्रं मुखं, ज्योतिश्चक्षुः, कल्पः करौ श्रुतेः।
शिक्षा नासा, निरुक्तं च श्रोत्रं, छन्दः पदद्वयम् ॥
अङ्गानामिह सर्वेषा-माधारः पदमेव हि।
जनोऽभिलषितं स्थानं यद्व विना गन्तुमक्षमः॥
नैवं शास्त्रान्तरं गन्तुं छन्दोज्ञानं विनाऽर्हति।
प्राधान्यं छन्दसस्तेन वेदाङ्गेष्वखिलेष्वपि॥
शिक्ष्यते गमनं चादौ बालैरन्यदनन्तरम्।
शिक्ष्यं पूर्वमिदं तद्वच्छन्दः परमतः परम् ॥
सन्ति पिङ्गलसूत्राद्यास्तद्ग्रन्था बहवः परम्।
पटूनां तत्र सन्देहो वटूनामथ का कथा॥
तस्मादस्मद्धितायैव काव्य—कानन—केसरी।
कालिदासः कृतिश्रेष्ठः कृतवान् ग्रन्थमुत्तमम् ॥
छन्दसां सारमादाय श्रुतबोधमिमं शुभम्।
वस्तुतो दृश्यतेऽत्रैव यथा नाम तथा गुणः॥
यद्यप्यस्य कृताष्टीका बहुभिः कोविदैः परम्।
बहुस्थानेषु सञ्जातो बहूनामपि सम्भ्रमः॥
स यथा'ऽऽख्यानकीत्यादौ प्राज्ञैः प्रत्यक्षमीक्ष्यताम्।
अतस्तन्मार्जनायैव गुप्तोपाख्येन धीमता॥
श्रीहरिकृष्णदासेन प्रार्थितोऽहं सुहृन्मुदे।
कृतवान् बालबोधाय टीकामस्याशुबोधिनीम्॥
क्रमादन्वयो, व्याख्या, समासस्तदनन्तरम्।
भाषार्थः, पैङ्गलादीनां लक्षणं सार्थमप्यथ॥
उदाहरणमप्यन्यत् सार्थमेव सुरक्षितम्।
अन्ते गणितभागश्च प्रश्नाश्च विविधास्तथा॥
एतैरुपकृतः कश्चिज्जनो यदि भविष्यति।
भविष्यति तदामेऽपि सफलोऽयं परिश्रमः॥
याऽत्र दृग्दोषसञ्जाता या च मुद्रणयन्त्रजा।
त्रुटिर्मानवधर्मत्वात् संशोध्या सा महाशयैः॥
इति ज्ञानदृशो विज्ञा विज्ञाप्यन्ते विवेकिनः।
यौगमा-ग्रामवास्तव्य-श्रीसीतारामशर्मणा॥

# अथ श्रुतबोधस्थविषयानुक्रमणिका



## अथ वृत्तप्रकरणम्-

## अथ टीकास्थविशेषविषयानुक्रमणिका



## अथ परिशिष्टच्छन्दोगणिते—



इति विषय सूची

---

## श्रुतबोधस्थमूलश्लोकानामकारादिक्रमेण—

## अनुक्रमणिका ।



॥ इति ॥

श्रीर्जयति तराम् ।

# अथ श्रुतबोधः

## आशुबोधिनीसहितः ।

अथ टीकाकारकृतमङ्गलाचरणम्—

याऽस्याम्भुवि प्रचुरसस्या सदा जननमस्यार्चितास्ति मिथिला
यस्यान्द्विजाः शुभतपस्या लसन्ति कृतवश्याऽखिलेन्द्रियगणाः ।
न स्यात्तमैकरदनस्यापि बुद्धिरपि यस्या गुणान् कलयितुं
तस्याः सुता मम मनस्यानिधाय पदमस्याऽऽतनोतु तिलकम् ॥

अत्रादौ तत्रभवान् कविकुलकुमुदकलानिधिः कालिदासः शिष्यशिक्षणार्थं वस्तुनिर्देशात्मकं मंगलमाचरति—

छन्दसां लक्षणं येन श्रुतमात्रेण बुध्यते ।
तमहं संप्रवक्ष्यामि श्रुतबोधमविस्तरम् ॥१॥

अन्वयः—श्रुतमात्रेण येन छन्दसां लक्षणं बुध्यते, अविस्तरं तं श्रुतबोधं अहं संप्रवक्ष्यामि ॥ १ ॥

व्याख्या—श्रुतमेव श्रुतमात्रं तेन श्रुतमात्रेण = पिङ्गलाद्युक्तगणनां विनैव केवलमाकर्णितेनैव, येन = ग्रन्थेन, छन्दसां = आर्या-पङ्क्त्यादिवृत्तानां, लक्षणं = लघु-गुरु-विरामस्थानादिबोधकं चिह्नं, बुध्यते = ज्ञायते, तं, अविस्तरं=संक्षिप्तसारार्थविभूषितं, श्रुतबोधं=एतन्नामकं छन्दोग्रन्थं, अहं सं प्रवक्ष्यामि = सम्यक् कथयिष्यामि । अथवा अविस्तरं यथा स्यात् तथा कथयिष्यामी'त्यविस्तरं' क्रियाविशेषणं ज्ञेयम् ॥ १ ॥

समासः—श्रुतेन बुध्यते येन, वा श्रुत एव बोधयतीति श्रुतबोधस्तम् । न विस्तरोऽविस्तरस्तम् ॥ १ ॥

भाषार्थः—जिस ग्रन्थ के केवल सुनने ही से प्रसिद्ध प्रसिद्ध ( आर्या, पङ्क्ति आदि ) छन्दों के लक्षणों का ज्ञान होता है, उस श्रुतबोध नामक ग्रन्थ को मैं संक्षेप से कहता हूँ ॥ १ ॥

अत्र विशेषः—

एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते ।
त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्धमात्रकम् ॥

अर्थ—एक मात्रा वाले स्वर तथा एकमात्रिकस्वर युक्त ककारादि वर्ण 'ह्रस्व' कहलाते हैं। तथा द्विमात्रिक स्वर और द्विमात्रिकस्वरयुक्त ककाराद्यक्षर 'दीर्घ' कहलाते हैं। इसी प्रकार जिस वर्ण के उच्चारण में तीन मात्रा समय लगता है वह प्लुत कहलाता है। और केवल व्यञ्जन ( स्वरहीन = हल् = ककारादि वर्ण ) अर्धमात्रिक होते हैं। यहाँ ध्यान रखना चाहिये कि छन्द में तीन मात्रा तथा आधा मात्रा की गणना नहीं होती है। संगीत आदि में तीन मात्रा और आधा मात्रा की भी गणना होती है।

"अ इ उ ऋ लृ" पञ्चैते लघवश्चैकमात्रिकाः ।
स्वरा द्विमात्रिकाश्चान्ये गुरवश्च प्रकीर्तिताः ॥"

अर्थ—"अ, इ, उ, ऋ, लृ," ये पांचो एक मात्रिक = ह्रस्व = लघु कहलाते हैं। और—"आ, ई, ऊ, ॠ, ॡ, ए, ऐ, ओ, औ" ये दीर्घ स्वर = द्विमात्रिक = गुरु कहलाते हैं। तथा अनुस्वार और विसर्गयुत वर्ण ( ह्रस्व भी ) द्विमात्रिक और गुरु कहलाता है ॥ १ ॥

अथ ग्रन्थकारो गुरुवर्णपरिभाषां कथयति—

**सँय्युक्ताद्यं दीर्घं सानुस्वारं विसर्गसम्मिश्रम् ।**
**विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन ॥ २ ॥**

अन्वयः—संयुक्ताद्यं, दीर्घं, सानुस्वारं, विसर्गसम्मिश्रं, अक्षरं गुरु विज्ञेयम्। किन्तु पादान्तस्थं (ह्रस्वं) विकल्पेन गुरु विज्ञेयम् ॥२॥

व्याख्या—संयुक्ताद्यं = संयुक्ताक्षरात् प्रथमं ( ह्रस्वमक्षरमिति शेषः) तथा दीर्घं = दीर्घस्वरयुक्तं, तथा सानुस्वारं = अनुस्वारसहितं, विसर्गसंमिश्रं = विसर्गसंयुतं (ह्रस्वमपीति शेषः) अक्षरं गुरु = द्विमात्रिकं विज्ञेयं = बोध्यम् । किन्तु पादान्तस्थं = चरणान्तस्थितं ( ह्रस्वमक्षरं) विकल्पेन गुरु = द्विमात्रिकं विज्ञेयम्, पादान्तस्थं ह्रस्वमक्षरं छन्दोमात्रानुरोधेन क्वचित् गुरु, कुत्रचित् लघ्वेव गण्यते इत्यर्थः ॥२॥

समासः—आदौ भवं आद्यं, संयुक्तादाद्यं = संयुक्ताद्यम्, अनुस्वा-

रेण सहितं = सानुस्वारम्, विसर्गेण सम्मिश्रं = विसर्गसम्मिश्रम्, पादस्यान्ते तिष्ठतीति पादान्तस्थम् ॥ २ ॥

भावार्थः—संयुक्त अक्षर से पूर्व के ह्रस्व अक्षर भी और दीर्घ तथा अनुस्वार और विसर्ग सहित ह्रस्व अक्षर भी गुरु (द्विमात्रिक) होते हैं। किन्तु चरण के अन्त में ह्रस्ववर्ण विकल्प से गुरु माना जाता है, अर्थात् छन्द के अनुरोध से चरण के अन्तिम ह्रस्व अक्षर कहीं द्विमात्रिक और कहीं संयुक्त अक्षर से पूर्व गुरुत्व पाने पर भी एक मात्रिक ही माना जाता है ॥ २ ॥

अत्र विशेषः—

लक्षणान्तरं छन्दोमञ्जर्याम्—

"सानुस्वारश्च दीर्घश्च विसर्गी च गुरुर्भवेत्।
वर्णः संयोगपूर्वश्च तथा पादान्तगोऽपि वा ॥"

अर्थ—उपरोक्त स्पष्ट है।

उपरोक्तोदाहरणम्—

"तरुणं सर्षपशाकं नवौदनं पिच्छिलानि च दधीनि।
अल्पव्ययेन सुन्दरि ग्राम्यजनो मिष्टमश्नाति ॥

यह आर्या छन्द है। इसमें आगे कहे हुए लक्षण के अनुसार द्वितीय चरण में १८, तथा चतुर्थ चरण में १५ मात्रायें होनी चाहिये, लेकिन गिनती से एक एक मात्रा कम होती है इसलिये उपरोक्त लक्षण के अनुसार विकल्प से यहाँ पदान्त-स्थित 'नि' कार और 'ति' कार को द्विमात्रिक मानकर मात्रा की पूर्ति होती है। तथा तृतीय चरण में १२ मात्रायें चाहिये लेकिन यहाँ तृतीय चरणान्तिमवर्ण (रि) को संयुक्ताक्षर (ग्रा) के पूर्व होने से द्विमात्रिक मानते हैं तो सब मात्रायें मिलकर १३ होती हैं, इसलिये यहाँ वह (रि) विकल्प से एक मात्रिक ही माना गया है।

तथा—"प्रे ह्रे वा"।

इस पिङ्गल सूत्र के अनुसार 'प्र' और 'ह्र' इन दोनों अक्षर के पूर्व ह्रस्व वर्ण पदमध्य में भी विकल्प से कहीं गुरु और कहीं लघु माना जाता है। यथा—

"प्राप्य नाभिह्रद मज्जनमाशु प्रस्थितं निवसनग्रहणाय।
औपनीविकमरुन्ध किल स्त्री वल्लभस्य करमात्मकराभ्याम्"

यह स्वागता छन्द है। इसमें प्रथम चरण का चतुर्थ अक्षर 'भि' संयुक्तअक्षर ह्र से पूर्व रहने पर भी उपरोक्त सूत्र के अनुसार लघु (एक मात्रिक) ही माना गया है। तथा—

सा मङ्गलस्नानविशुद्धगात्री गृहीतप्रत्युद्गमनायवस्त्रा।
निर्वृत्तपर्जन्यजलाभिषेका प्रफुल्लकाशा वसुधेव रेजे॥

यह उपजातिच्छन्द है। इसके द्वितीय चरण के तृतीय अक्षर 'त' प्र से पूर्व रहने पर भी उपरोक्त सूत्र के अनुसार एक मात्रिक ही माना गया है।

अभ्यासार्थं पद्यम्—

प्रह्रपूर्वस्थितो ह्रस्वः पदमध्यगतोऽपि सन्।
क्वचिद्गुरुर्लघुः क्वापि ज्ञेयच्छन्दोविशारदैः॥

अथच्छन्दोभेदः—

"पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा।
वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेत्॥"

अर्थ—चार चरणों का निबन्ध पद्य कहलाता है। वह वृत्त तथा जाति भेद से दो प्रकार है—जो अक्षर के हिसाब से बनाया जाता है वह 'वृत्त' तथा जो मात्रा के हिसाब से बनता है वह जाति नाम से व्यवहृत है।

तथा—"सममर्धसमं वृत्तं विषमं चेति तत् त्रिधा।
समं समचतुष्पादं, भवत्यर्धसमं पुनः॥
आदिस्तृतीयवद्यस्य द्वितीयस्तुर्यवत्तथा।
भिन्नभिन्नचतुष्पादं विषमं परिकीर्तितम्॥"

अर्थ—वे भी सम, अर्धसम और विषम भेद से तीन प्रकार हैं। जिसके चारों चरण में समान लक्षण हों वह सम, तथा जिसके प्रथम चरण तृतीय चरण के समान और द्वितीय चरण चतुर्थ चरण के समान हो वह अर्धसम, तथा जिसके चारों चरण भिन्न भिन्न लक्षण के हों वह विषम छन्द कहलाता है।

अथ गणभेदः—

चतसृभिश्च मात्राभिर्जाता पञ्च गणाः स्मृताः।
वर्णैस्त्रिभिस्तथा वृत्ते गणाश्चाष्टौ प्रकीर्तिताः॥

अर्थ—चार चार मात्राओं से आर्या आदि मात्रिक छन्दों में पांच गण होते हैं, और तीन तीन अक्षरों से आठ प्रकार के गण वार्णिक वृत्तों में होते हैं।

मात्रागणस्वरूपम्—

ज्ञेयाः सर्वान्त्यमध्यादिगुरवश्च चतुष्कलाः।
गणाश्चतुर्लघूपेताः पञ्चार्यादिषु संस्थिताः॥

अर्थ—१ सर्व गुरु, (२) अन्त्य गुरु, (३) मध्य गुरु, (४) आदि गुरु, (५) सर्वलघु ये पाँच प्रकार के गण आर्यादि मात्रा छन्दों में रहते हैं। स्पष्टार्थ चक्र देखो—

मात्रागणस्वरूप-चक्रम् ।

| ० | रूप | मात्रा | उदाहरण | नाम |
|---|---|---|---|---|
| सर्वगुरु | ऽऽ | ४ | गंगा | मगण |
| अन्त्य गुरु | ।।ऽ | ४ | यमुना | सगण |
| मध्य गुरु | ।ऽ। | ४ | गणेश | जगण |
| आदि गुरु | ऽ।। | ४ | शंकर | भगण |
| सर्व लघु | ।।।। | ४ | हरिहर | नगण |

अथ वर्णगणनामानि—

मगणो यगणश्चैव रगणः सगणस्तथा ।
तगणो जगणश्चैव भगणो नगणस्ततः ॥

अर्थ—स्पष्ट । ये आठ प्रकार के वर्णगण हैं ॥२॥

अथ लक्षणपूर्वकं गणनामानि कथयति—

**आदिमध्यावसानेषु भजसा यान्ति गौरवम् ।**
**यरता लाघवं यान्ति मनौ तु गुरुलाघवम् ॥३॥**

अन्वयः—भजसाः आदिमध्यावसानेषु गौरवं यान्ति । यरताः (आदिमध्यावसानेषु) लाघवं यान्ति । (तथा) मनौ गुरुलाघवं (यातः) ॥३॥

व्याख्या—भ-ज-साः = भगण-जगण-सगणाः (क्रमेण) आदिमध्यावसानेषु = प्रथममध्यान्तेषु गौरवं = गुरुत्वं यान्ति = प्राप्नुवन्ति । य-र-ताः = यगण-रगण-तगणाः (क्रमेण) आदिमध्यावसानेषु लाघवं = लघुत्वं यान्ति । तु = तथा मनौ = मगण-नगणौ (क्रमेण) गुरुलाघवं = गुरुत्व-लघुत्वे यातः = प्राप्नुतः । अर्थादेव आदिगुरुर्भगणः, मध्यगुरुर्जगणः, अन्तगुरुः सगणः आदिलघुर्यगणः, मध्यलघू रगणः, अन्तलघुस्तगणः, सर्वगुरुर्मगणः सर्वलघुर्नगण इति ॥३॥

समासः—आदिश्च मध्यश्चावसानं चेति आदिमध्यावसानानि तेषु । भश्च जश्च सश्चेति भजसाः । यश्च रश्च तश्चेति यरताः । मश्च नश्चेति मनौ ॥३॥

भावार्थः—तीन तीन अक्षरों के जो आठ गण हैं उनमें केवल आदि गुरु जिसमें हो वह भगण, केवल मध्य गुरु हो तो जगण, केवल अन्त गुरु हो तो सगण, यदि केवल आदि लघु हो तो यगण, केवल मध्यलघु हो तो रगण, केवल अन्त अक्षर लघु हो तो तगण, तथा तीनों अक्षर गुरु हों तो मगण, और तीनों लघु हों तो नगण होता है ॥३॥

अत्र विशेषः—

लक्षणान्तरं वृत्तरत्नाकरे—

मस्त्रिगुरुस्त्रिलघुश्च नकारो भादिगुरुः पुनरादिलघुर्यः ।
जो गुरुमध्यगतो रलमध्यः सोन्त्यगुरुः कथितोन्तलघुस्तः ॥

अर्थ—स्पष्ट है । तथा—

वक्ररेखा गुरोश्चिह्नं सरला च लघोस्तथा ।
गुरुरेको गकारस्तु लकारो लघुरेककः ॥

अर्थ—छन्दःशास्त्र में वक्र रेखा ( ऽ ) गुरु अक्षर के द्योतक तथा सरल रेखा ( । ) लघु अक्षर के द्योतक समझना । तथा गकार से गुरु और लकार से एक लघु अक्षर समझना चाहिये ।

अथ गणानां देवतास्तत्फलानि च—

"मो भूमिः श्रियमातनोति, य जलं वृद्धिं, र वह्निर्मृतिं ,
सो वायुः परदेशदूरगमनं, तो व्योम शून्यं फलम् ।
जः सूर्यो भयमाददाति विपुलं, भेन्दुर्यशो निर्मलं ,
नो नाकश्च सुखप्रदः फलमिदं प्राहुर्गणानां बुधाः ॥"

अर्थ—मगण की भूमि देवता है और लक्ष्मीलाभ फल है, यगण की जल-देवता वृद्धि फल, रगण की देवता अग्नि और फल मृत्यु, सगण की वायु देवता फल विदेश गमन, तगण की देवता आकाश फल शून्य, जगण की देवता सूर्य फल भय, भगण की देवता चन्द्रमा, फल सुयश, नगण की देवता स्वर्ग और फल सुखलाभ । इस प्रकार आठों गण का फल पण्डितों ने कहा है ॥

एवं शुभाशुभगणस्मरणार्थं पद्यम्—

मनभयाः शुभदाश्च गणास्तथा जसरता अशुभा विबुधैः स्मृताः ।
नहि भवेदशुभः प्रथमस्तथा विरचयेदिह मात्रिकपद्यकम् ॥

अर्थ—स्पष्ट है । भाव यह है कि वार्णिक पद्य में अशुभ गण का दोष नहीं माना जाता है । केवल मात्रिक छन्द के आदि में ही गण का शुभाशुभ फल समझना । इसलिये ध्यान रखना चाहिये कि लौकिक काव्य रचना में मात्रिक

छन्दों के आदि में अशुभ गण न पड़े। देव-सम्बन्धी काव्य में अशुभ गण का भी दोष नहीं है। तथा—

"देवतावाचकाः शब्दा ये च भद्रादिवाचकाः।
ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा॥"

अर्थ—देवता वाचक तथा मङ्गलादि वाचक शब्द आदि में पड़ने से गण दोष वा वर्ण दोष नहीं होता है॥३॥

अथ गणदेवता-फलादिबोधकचक्रम्—

| | रेखा रूप | नाम | उदाहरण | संकेताक्षर | देवता | शुभाऽशुभ | फल |
|---|---|---|---|---|---|---|---|
| सर्वगुरु | SSS | मगण | मेधावी | म. | भूमि | शुभ | श्रीलाभ |
| आदिलघु | ISS | यगण | यशोदा | य. | जल | शुभ | वृद्धि |
| मध्यलघु | SIS | रगण | राधिका | र. | अग्नि | अशुभ | मरण |
| अन्तलघु | SSI | तगण | तालाङ्क | त | आकाश | अशुभ | शून्य |
| आदिगुरु | SII | भगण | भादव | भ. | चन्द्र | शुभ | यश |
| मध्यगुरु | ISI | जगण | जनेश | ज. | सूर्य | अशुभ | भय |
| अन्तगुरु | IIS | सगण | सरसी | स. | वायु | अशुभ | विदेश गमन |
| सर्वलघु | III | नगण | नयन | न | स्वर्ग | शुभ | सुख |
| गुरुवर्ण | S | ग | गा | ❀ | ❀ | ❀ | ❀ |
| लघुवर्ण | I | ल | ल | | | | |

## अथ जात्यपरनाममात्राछन्दःप्रकरणम्।

### तत्रादौ पथ्यासंज्ञकार्याछन्दोलक्षणम्—

**यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि।
अष्टादश द्वितीये चतुर्थके पञ्चदश साऽऽर्या॥ ४॥**

अन्वयः—यस्याः प्रथमे पादे द्वादश मात्राः तथा तृतीये अपि पादे

द्वादश मात्रा (भवंति), तथा द्वितीये अष्टा दश, चतुर्थके पञ्चदश मात्राः सा आर्या (ज्ञेया) ॥ ४ ॥

व्याख्या—यस्याः प्रथमे पादे = प्रथमे चरणे, द्वादश मात्राः तथा तृतीयेऽपि चरणे द्वादशमात्रा भवन्ति, तथा द्वितीये चरणे अष्टादश मात्राः, चतुर्थके = चतुर्थे चरणे पञ्चदश मात्रा भवन्ति सा आर्या ज्ञेया ( तस्यच्छन्दसो नाम आर्येति ॥ ४ ॥

समासः—द्वौ च दश चेति द्वादश। अष्टौ च दश चेति अष्टादश। पञ्च च दश चेति पञ्चदश ॥ ४ ॥

भाषार्थः—जिसके प्रथम और तृतीय चरण में बारह बारह मात्रायें तथा द्वितीय चरण में अठारह और चतुर्थ चरण में पन्द्रह मात्रायें हों उस छन्द का नाम आर्या है ॥ ४ ॥

अत्र विशेषः—

पूर्वदले चेत्त्रिंशत् तथोत्तरे सप्तविंशतिश्चार्या।

अर्थ—जिसके पूर्वार्धमें ( प्रथम द्वीतीय पद मिलाकर ) ३० तीस, और उत्तरार्ध में ( तृतीय चतुर्थ चरण मिलाकर ) २७ सत्ताइस, इस प्रकार चारों चरण मिलाकर ५७ मात्राये हों, वह आर्या है। पिंगल आदि में इस छन्द का नाम पथ्या कहा है।

तथा लक्षणान्तरं पिङ्गलसूत्रे—

"त्रिषु गणेषु पादो पथ्यार्धे च"।

अर्थ—४ चार मात्रा के एक गण होता है। जिस छन्द के पूर्वार्ध और उत्तराधं में तीन गण ( १२ मात्रा पर ) पाद विभाग हो वह पथ्या है।

तथा छन्दोमञ्जर्याम्—

"प्रथमगणत्रयविरतिर्दलयोरुभयोः प्रकीर्तिता पथ्या।"

अर्थ—जिसके पूर्वार्ध और उत्तरार्ध दोनों में तीन गण ( १२ मात्रा ) पर विश्राम हो वह पथ्या नामक आर्या है।

वृत्तरत्नाकरेऽपि लक्षणम्—

"त्रिष्वंशकेषु पादो दलयोराद्येषु दृश्यते यस्याः।
पथ्येति नाम तस्याश्छन्दोविद्भिः समाख्यातम् ॥"

अर्थ—उपरोक्त स्पष्ट है ॥

उदाहरणान्तरम्—

"पथ्याशी व्यायामी स्त्रीषु जितात्मा नरो न रोगी स्यात्।
यदि मनसा वचसा वा द्रुह्यति नित्यं न भूतेभ्यः ॥"

अर्थ—पथ्यसे ( नियम से ) भोजन करने वाला और व्यायाम ( कसरत ) करने वाला, स्त्रीविषय में जितेन्द्रिय ऐसा मनुष्य अगर मन या वचन से किसी प्राणी का द्रोह न करे तो वह कभी रोगग्रस्त नहीं होता है ॥४॥

अथ गीतिच्छन्दोलक्षणम्—

**आर्यापूर्वार्धसमं द्वितीयमपि यत्र भवति हंसगते ?।**
**छन्दोविदस्तदानीं गीतिंताममृतवाणि ? भाषन्ते ॥५॥**

अन्वयः—हे हंसगते ? यत्र आर्यापूर्वार्धसमं द्वितीयं अपि भवति, हे अमृतवाणि ? तदानीं छन्दोविदः तां गीतिं भाषन्ते ॥ ५ ॥

व्याख्या—हे हंसगते = मरालगमने ! यत्र = यस्मिन् छन्दसि द्वितीयं = उत्तरार्धं, अपि, आर्यापूवार्धसमं = आर्यायाः = "यस्याः पादे प्रथमे" इत्यादि पूर्वोक्तायाः पूर्वार्धेन समं = तुल्यं भवति हे अमृतवाणि ! = सुधोपमवचने ! छन्दोविदः = छन्दःशास्त्रज्ञाः तां गीतिं = गीतिसंज्ञकां भाषन्ते = कथयन्ति ॥ ५ ॥

समासः—आर्यायाः पूवार्धेन सममिति 'आर्यापूर्वार्धसमम् । हंसस्य गतिरिव गतिर्यस्याः सा हंसगतिस्तत्सम्बोधने हे हंसगते । अमृतमिव वाणी यस्याः साऽमृतवाणी तत्सम्बोधने हेऽमृतवाणिः ।' छन्दांसि विदन्ति इति च्छन्दोविदः ॥ ५ ॥

भाषार्थः—हे हंसगमने ? जिस छन्द में आर्या (पूर्वोक) छन्द के पूर्वार्ध के समान उत्तरार्ध भी हो हे अमृतवाणि ? छन्द को जानने वाले उसका नाम गीति कहते हैं ॥ ५ ॥

अत्र विशेषः—

लक्षणान्तरं पिङ्गलसूत्रे—

"आद्यार्धसमा गीतिः"।

अर्थ—पूर्वोक्त पथ्यार्या के पूर्वार्धसमान उत्तरार्ध भी हो तो 'गीति' कहलाती है।

तथा छन्दोमञ्जर्याम्—

"आर्यापूर्वार्धसमं यस्या अपरार्धमाह तां गीतिम् ।

अर्थ—स्पष्ट है ।

वृत्तरत्नाकरे—

"आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः ।
दलयोः कृतयति शोभां तां गितिं गीतवान् भुजङ्गेशः ॥

अर्थ—उपरोक्त स्पष्ट है । यही उदाहरण रूप भी है ॥ ५ ॥

अथोपगीतिलक्षणम्—

**आर्योत्तरार्धतुल्यं प्रथमार्धमपि प्रयुक्तं चेत्।**
**कामिनि! तामुपगीतिं प्रकाशयन्ते महाकवयः॥ ६॥**

अन्वयः—हे कामिनि! चेत् प्रथमार्धमपि आर्योत्तरार्धतुल्यं प्रयुक्तं (स्यात्) तां महाकवयः उपगीतिं प्रकाशयन्ते॥ ६॥

व्याख्या—हे कामिनि! चेत = यदि प्रथमार्धमपि = पूर्वार्धमपि आर्योत्तरार्धतुल्यं = पूर्वोक्तार्याया उत्तरार्धेण तुल्यं = सदृशं प्रयुक्तं = रचितं ( भवेत् ) 'तदा' महाकवयः = कविश्रेष्ठाः तां उपगीतिं = उपगीतिसंज्ञकामार्यां प्रकाशयन्ते = प्रकटी कुर्वन्ति = कथयन्तीत्यर्थः॥६॥

समासः—कामोऽस्या अस्तीति कामिनी तत्सम्बोधने हे कामिनि! उत्तरञ्च तदर्धं चेत्युत्तरार्धम्। आर्याया उत्तरार्धमित्यार्योत्तरार्धम्, तेन तुल्यमित्यार्योत्तरार्धतुल्यम्। प्रथमञ्च तदर्धं चेति प्रथमार्धम्। महान्तश्च ते कवयश्चेति महाकवयः॥ ६॥

भाषार्थः—हे कामिनि! जिस छन्द के प्रथमार्ध भी (प्रथम द्वितीय चरण मिलकर) पूर्वोक्त आर्या ("यस्याः पादे प्रथमे" इत्यादि) छन्द के उत्तरार्ध (३, ४ चरण) के समान हो उसको महाकवि उपगीति नामक छन्द कहते हैं॥ ६॥

अत्र विशेषः—
लक्षणान्तरं पिङ्गलसूत्रे—
"अन्त्येनोपगीतिः।"

अर्थ—आर्या के अन्त्य (उत्तरार्ध) के बराबर पूर्वार्ध भी हो तो उपगीति नामक छन्द होता है॥

छन्दोमञ्जर्याम्—
"आर्यापरार्धतुल्ये दलद्वये प्राहुरुपगीतिम्।"

अर्थ—उपरोक्त स्पष्ट है।

वृत्तरत्नाकरे
"आर्याद्वितीयेकेऽर्धे यद् गदितं लक्षणं तत् स्यात्।
यद्युभयोरपि दलयोरुपगीतिं तां मुनिर्ब्रूते॥
अर्थ—स्पष्ट है। यह उदाहरण रूप भी है॥

उदाहरणान्तरम्—

"नवगोपसुन्दरीणां रासोल्लासे मुरारातिम् ।
अस्मारयदुपगीतिः स्वर्गकुरङ्गीदृशां गीतेः ॥

अर्थ—रासोत्सव में नव गोपियों का गाना कृष्ण को स्वर्गीय अप्सराओं की गीति का स्मरण कराया ॥ ६ ॥

इति चौगमानिवासिपण्डितश्रीसीतारामशर्मकृताशुबोधिनीसमाख्य-श्रुतबोधटीकायां मात्राछन्दःप्रकरणम् ।

## अथ वृत्तप्रकरणम् ।

### तत्रादौ पञ्चाक्षरवृत्ते पंक्तिच्छन्दोलक्षणम्—

आद्यचतुर्थं पञ्चमकं चेत् ।
यत्र गुरु स्यात्साक्षरपंक्तिः ॥ १ ॥

अन्वयः—यत्र आद्यचतुर्थं पञ्चमकं चेत् गुरु, (तदा) सा अक्षरपंक्तिः स्यात् ॥ १ ॥

व्याख्या—यत्र = यस्मिन् वृत्ते, आद्यचतुर्थं = प्रथमंचतुर्थं, तथा पञ्चमकं = पञ्चमं अक्षरं चेत् = यदि गुरु = द्विमात्रिकं स्यात् तदा सा अक्षरपंक्तिः = पंक्तिनामकं छन्दः स्यात् = भवेत् ॥ १ ॥

समासः—आदौ भवं आद्यं, तच्च चतुर्थं चेत्याद्यचतुर्थम् ॥ १ ॥

भावार्थः—जिस पञ्चाक्षर छन्द के प्रत्येक चरण में प्रथम, चतुर्थ, पञ्चम अक्षर गुरु हों (अर्थात् द्वितीय तृतीय अक्षर लघु हो) वह पंक्तिनामक छन्द होता है ॥ १ ॥

अत्र विशेषः—

वस्तुतः पंक्तिरेवास्य नाम पूर्वैः प्रकीर्तितम् ।
अत्रोक्ता पादपूर्णार्थं पंक्तिरक्षरपूर्विका ॥

अर्थ—वास्तव में उपरोक्त छन्द का नाम पूर्वाचार्य पंक्ति ही कहे हैं । यहाँ पद-पूर्णार्थ कालिदास ने 'अक्षर-पंक्ति' नाम कहा है ।

तथा च च्छन्दोमञ्जरीवृत्तरत्नाकरयोः—

"भ्गौगिति पङ्क्तिः ।"

अर्थ—'भ् ग ग्' अर्थात् जिस के प्रत्येक चरण में एक भगण = ऽ।। और दो गुरु वर्ण (ऽऽ) हो वह पंक्ति नामक छन्द है ।

तत्रैवोदाहरणान्तरम्—

भ ग.ग.

ऽ।।. ऽऽ

"कृष्णस-नाथा तर्णकपङ्क्तिः।
यामुनकक्षे चारु चचार॥"

अर्थ—कृष्ण के साथ तर्णक पंक्ति ( बछरुओं की श्रेणी ) यमुना नदी के तीर में घूमती थीं॥

तथा च—

आरभ्यैकाक्षरात् पादादेकैकाक्षरवर्द्धितैः।
पृथक् छन्दो भवेत् पादैर्यावत् षड्विंशतिं गतम्॥
तदूर्ध्वं चण्डवृष्ट्यादि-दण्डकाः परिकीर्तिताः।
शेषं गाथास्त्रिभिः षड्भिश्चरणैश्चोपलक्षिताः॥

अर्थ—एक अक्षर के चरण वाले से आरम्भ करके २६ अक्षरों तक के चरण वाले ( उक्था' आदि २६ ) नाम से २६ प्रकार के वृत्त होते हैं। छब्बिस (२६) से अधिक अक्षर के चरण वाले छन्द 'चण्डवृष्टि' आदि दण्डक कहलाते हैं। शेष तीन या छः चरण आदि वाले गाथा नाम से प्रसिद्ध हैं।

तथा—

उक्था १ त्युक्था २ तथा मध्या ३ प्रतिष्ठा ४ सा सुपूर्विका ५।
गायत्र्यु ६ ष्णि ७ गनुष्टुप् ८ च बृहती ९ पंक्ति १० रेव च॥
त्रिष्टुप् ११ च जगती १२ चैत्र तथाऽतिजगती १३ मता।
शक्करी १४ साति पूर्वा १५ स्यादष्ट्य १६ त्यष्टी १७ ततः स्मृते॥
धृति १८ श्चातिधृति १९ श्चैव कृतिः २० प्रकृति २१ राकृतिः २२।
विकृतिः २३ संकृतिश्चैव २४ तथाऽतिकृति २५ रुत्कृतिः २६॥

अर्थ—एक अक्षर वाले उक्था दो अक्षर के चरण वाले अत्युक्था, ३ अक्षर के चरण वाले मध्या, ४ अक्षर के प्रतिष्ठा, '५ अक्षर के सुप्रतिष्ठा, ६ अक्षर के चरण वाले गायत्री इत्यादि कहलाते हैं॥

यहाँ कवि कालिदास ५ अक्षर वाले ही से आरम्भ कर कुछ प्रसिद्ध प्रसिद्ध छंदों को अपने ग्रन्थ में लिखे हैं। ५ अक्षर के चरण वाले छन्द सुप्रतिष्ठा कहलाते हैं वे बत्तिस ३२ प्रकार के होते हैं उन्हीं में से यह उपरोक्त एक पंक्ति छन्द भी है॥१॥

## अथ षडक्षरवृत्ते 'शशिवदना' छन्दोलक्षणम्—

**अगुरु चतुष्कं भवति गुरू द्वौ।
घनकुचयुग्मे! शशिवदनाऽसौ॥२॥**

अन्वयः—हे घनकुचयुग्मे ! ( यत्र ) चतुष्कं अगुरु, भवति द्वौ गुरू ( भवतः ) असौ शशिवदना स्यात् ॥ २ ॥

व्याख्या—हे घनकुचयुग्मे = निविडस्तनयुगले यत्र वृत्ते चतुष्कं = आद्याक्षरचतुष्टयं अगुरु = लघु भवति तथा द्वौ = पञ्चमषष्ठौ वर्णौ गुरू = द्विमात्रिकौ भवतः असौ शशिवदना = एतन्नामकच्छन्दः स्यात् ॥ २ ॥

समासः—कुचयोर्युग्मं = कुचयुग्मम्, घनं कुचयुग्मं यस्याः सा घन-कुचयुग्मा तत्सम्बोधने हे घनकुचयुग्मे ! ॥ २ ॥

भावार्थः—जिस ( षडक्षर चरण वाले ) छन्द में आदि के चार अक्षर लघु हों और पञ्चम षष्ठ दोनों गुरु हों तो उस छन्दका नाम शशिवदना है ॥ २ ॥

अत्र विशेषः—

लक्षणं च वृत्तरत्नाकरादौ—

"शशिवदना न्यौ"।

अर्थ—जिस छन्द के प्रत्येक चरण में ( न० य० ) अर्थात् एक नगण और एक यगण हो उस छन्द को शशिवदना कहते हैं।

उदाहरणान्तरम्—

न० य०

। । । । ऽ ऽ

"शशिव-दनानां व्रजयुवतीनां !
अधरसुधोर्मिं मधुरिपुरैच्छत् ॥

अर्थ—मधुरिपु ( कृष्ण भगवान ने ) चन्द्रमुखी व्रजयुवतियों के अधर-सुधारस की इच्छा की ॥ २ ॥

अथ सप्ताक्षरवृत्ते 'मदलेखा' छन्दोलक्षणम्—

तुर्यं पञ्चमकं चेद्यत्र स्याल्लघु बाले ? ।
विद्वद्भिर्मृगनेत्रे ? प्रोक्ता सा मदलेखा ॥३॥

अन्वयः—हे बाले ! यत्र तुर्यं पञ्चमकं चेत् लघु स्यात्। तदा हे मृगनेत्रे ! विद्वद्भिः सा मदलेखा प्रोक्ता ॥ ३ ॥

व्याख्या—हे बाले = नूतनवयस्के यत्र = यस्मिन् वृत्ते तुर्यं = चतुर्थं, पञ्चमकं = पञ्चमं, अक्षरं लघु = एकमात्रिकं चेत् = यदि स्यात् तदा हे

मृगनेत्रे = हरिणलोचने ! सा = उक्तलक्षणयुक्ता विद्वद्भिः = पण्डितैः मदलेखा प्रोक्ता = कथिता ॥ ३ ॥

समासः—मृगस्य नेत्रे इव नेत्रे यस्याः सा मृगनेत्रा तत्सम्बोधने हे मृगनेत्रे ॥ ३ ॥

भाषार्थः—जिस सप्ताक्षर वृत्त के प्रत्येक चरण में चतुर्थ और पञ्चम अक्षर लघु और शेष अक्षर गुरु हो उस छन्द का नाम पण्डितों ने मदलेखा कहा है। यहाँ 'वाले' और मृगनेत्रे दोनों सम्बोधन पद हैं ॥ ३ ॥

अत्र विशेषः—

लक्षणं वृत्तरत्नाकरादौ—

"म्सौ गः स्यान्मदलेखा ।";

अर्थ—जिस छन्द के प्रत्येक चरण में ( म् स० ग० ) अर्थात् एक मगण एक सगण और एक गुरु इस प्रकार सात अक्षर हों उसका नाम मदलेखा है।

उदाहरणान्तरम्—

म० स० ग०

ऽऽ ऽ । । ऽ ऽ

"रङ्गे वा-हुविरुग्णाद् दन्तीन्द्रान्मदलेखा ।
लग्नाभून्मुरशत्रौ कस्तूरीरसचर्चा ॥

अर्थ—रङ्गभूमि में दन्तीन्द्र ( कुवलयापीड़ ) के सूंड़ से निकला हुआ दान-जल कृष्ण के शरीर में लगकर कस्तूरीरस के समान हो गया ॥ ३ ॥

## अथाष्टाक्षरवृत्तेऽनुष्टुब्भेदश्लोकलक्षणम्—

**श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम् ।**
**द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ॥ ४ ॥**

अन्वयः—श्लोके सर्वत्र षष्ठं गुरु (तथा) पञ्चमं लघु ज्ञेयम् । (तथा) द्विचतुष्पादयोः सप्तमं ह्रस्वं अन्ययोः सप्तमं दीर्घं ज्ञेयम् ॥ ४ ॥

व्याख्या—श्लोके = श्लोकनाम्न्यनुष्टुप्छन्दसि सर्वत्र = सर्वेषु चरणेषु षष्ठं अक्षरं गुरु = द्विमात्रिकं तथा पंचमं सर्वचरणेषु लघु = एकमात्रिकं ज्ञेयम् = बोध्यम् । तथा द्विचतुष्पादयोः = द्वितीय-चतुर्थचरणयोः सप्तमं अक्षरं ह्रस्वं = एकमात्रिकं तथा अन्ययोः = प्रथम-तृतीययोः सप्तमं दीर्घं = द्विमात्रिकं ज्ञेयम् = बोध्यम् ॥ ४ ॥

समासः—द्वितीयश्च चतुर्थश्च तौ पादौ चेति द्विचतुष्पादौ तयोः द्विचतुष्पादयोः । अन्यश्च, अन्यश्चेत्यन्यौ तयोरन्ययोः ॥ ४ ॥

भाषार्थः—श्लोक ( अनुष्टुप् ) छन्द के चारों चरण में छठवाँ अक्षर गुरु तथा पाँचवाँ अक्षर लघु होता है। तथा द्वितीय और चतुर्थ चरण में सातवां अक्षर लघु, और प्रथम तृतीय चरणों में सप्तम दीर्घ = गुरु होता है ॥ ४ ॥

अत्र विशेषः—

सर्वाण्यनुष्टुवाख्यानि च्छन्दांस्यष्टाक्षराणि चेत् ।
किन्त्वत्र श्लोकमेवाहुर्बुधाः सर्वे ह्यनुष्टुभम् ॥

अर्थ—आठ अक्षर के चरण वाले जितने छन्द हैं सब अनुष्टुप् कहलाते हैं। किन्तु उपरोक्त श्लोक को ही पण्डित लोग अनुष्टुप कहते हैं। इसी को कोई पद्य भी कहते हैं।

तथा—

"पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः ।
षष्ठं गुरु विजानीयादेतत्पद्यस्य लक्षणम् ॥"

अर्थ—सर्व चरणों में पांचवां अक्षर लघु और द्वितीय चतुर्थ में सप्तम लघु अर्थात् प्रथम तृतीय में सप्तम गुरु, तथा सब चरण में छठा अक्षर गुरु यह पद्य का लक्षण है। शेष अक्षरों के लिये कोई नियम नहीं चाहे वे लघु हों या दीर्घ हों। उपरोक्त पद्य उदाहरण रूप भी है।

तथोदाहरणान्तरम्—

।ऽ ऽ ।ऽ।
आधारो जगतां यश्च बाधाव्याधिविनाशकः ।
।ऽ ऽ ।ऽ ।
राधानाथस्य तस्याङ्घ्रि-माधाय हृदये भजे ॥

अर्थ—जो समस्त जगत के आधार हैं और बाधाव्याधि को विनाश करने वाले हैं उन राधापति ( श्रीकृष्ण ) के चरण हृदय में रख कर भजन करता हूँ।

ऊपर लिखित श्लोक में सरल, वक्र रेखा से क्रम से लघु गुरु अक्षर द्योतित किये गये हैं, इसी प्रकार आगे भी दिखलाये गये हैं ॥ ४ ॥

## अथाष्टाक्षरवृत्ते माणवकाक्रीडलक्षणम्— २

**आदिगतं तुर्यगतं पञ्चमकं चान्त्यगतम् ।**
**स्याद् गुरु चेत् तत्कथितं माणवकाक्रीडमिदम् ॥५॥**

अन्वयः—आदिगतं, तुर्यगतं, पञ्चमकं, च (पुनः) अन्त्यगतं चेत् गुरु स्यात् तदा तदिदं माणवकाक्रीडं कथितम् ॥५॥

व्याख्या—'यत्र' आदिगतं = प्रथमं, तुर्यगतं = चतुर्थं, पञ्चगतं = पञ्चममं च = तथा अन्त्यगतं = चरणान्तिमं = अष्टममक्षरमित्यर्थः चेत् = यदि गुरु = द्विमात्रिकं स्यात् = भवेत् तदा तदिदं = उक्तलक्षण-युतं छन्दः माणवकाक्रीडं कथितं कविभिरिति शेषः ॥५॥

समासः—आदिं गतमित्यादिगतम् । तुर्यं गतं = तुर्यगतम् । अन्त्यं गतमित्यन्त्यगतम् ॥ ५ ॥

भाषार्थः—जिसमें प्रथम, चतुर्थ, पञ्चम और अष्टम अक्षर गुरु हों उस आठ अक्षर के चरणवाले छन्द को पण्डित लोग माणवका-क्रीड कहते हैं ॥ ५ ॥

अत्र विशेषः—

लक्षणान्तरं पिङ्गलसूत्रे—

"माणवकाक्रीडितकं भ्तौ ल्गौ ।"

अर्थ—जिसके प्रत्येक चरण में एक भगण, एक तगण एक लघु और एक गुरु क्रम से हों वह माणवका-क्रीडित छन्द है ।

तथा वृत्तरत्नाकरादौ—

"माणवकं भात् तलगाः ।"

अर्थ—भगण के बाद एक तगण, एक लघु एक गुरु हो तो माणवकाक्रीड होता है ।

उदाहरणम्—

भ. त. ल. ग.

ऽ । । ऽ ऽ । । ऽ

"माणव-काक्रीडि-तकं यः कुरुते वृद्धवयाः ।
हास्यमसौ याति जने भिक्षुरिव स्त्रीचपलः ॥

अर्थ—जो वृद्ध होकर भी बालक के सदृश क्रीड़ा करते हैं वे स्त्रीलम्पट फकीरों के सदृश हास्यास्पद होते हैं ॥ ५ ॥

अथ प्रमाणिकापरनामक-नगस्वरूपिणीलक्षणम्—

द्वितुर्यषष्ठमष्टमं गुरु प्रयोजितं यदा ।
तदा निवेदयन्ति तां बुधा नगस्वरूपिणीम् ॥ ६ ॥

अन्वयः—यदा द्वितुर्यषष्ठं, अष्टमं च गुरु प्रयोजितं तदा तां बुधाः, नगस्वरूपिणीं निवेदयन्ति ॥ ६ ॥

व्याख्या—यदा यत्र वृत्ते द्वितुर्यषष्ठं = द्वितीयं, तुर्यं, षष्ठं तथा अष्टमं अक्षरं गुरु = द्विमात्रिकं प्रयोजितं स्यात् तदा तां = उक्तलक्षण-युतां बुधाः = पण्डिताः नगस्वरूपिणीं = एतन्नामकञ्छन्दः निवेदयन्ति = कथयन्ति ॥ ६ ॥

समासः—द्वितीयं च तुर्यं च षष्ठं चेति द्वितुर्यषष्ठम् ॥६॥

भावार्थः—जिस छन्द के प्रत्येक चरण में द्वितीय, चतुर्थ, षष्ठ और अष्टम अक्षर गुरु हों उस आठ अक्षर के चरण वाले छन्द को पण्डित लोग नगस्वरूपिणी कहते हैं ॥ ६ ॥

अत्र विशेषः—

प्रमाणिकां वदन्ति यां महर्षिपिङ्गलादयः ।
निवेदयन्ति केऽपि तां बुधा नगस्वरूपिणीम् ॥

अर्थ—पिङ्गल आदि महर्षि जिस छन्द को प्रमाणिका कहे हैं उसी को कालिदास नगस्वरूपिणी कहते हैं ।

तथा पिङ्गलसूत्रे—

"लिगिति प्रमाणिका ।"

अर्थ—ल् ग् अर्थात् लघु गुरु क्रम से विन्यास कर आठ अक्षर के पद के बने हुए छन्द को प्रमाणी कहते हैं ।

तथा वृत्तरत्नाकरादौ—

"प्रमाणिका जरौ लगौ" ।

अर्थ—एक जगण बाद एक रगण एक लघु और एक गुरु इस प्रकार आठ अक्षर के चरण वाले छन्द को प्रमाणिका कहते हैं ।

उदाहरणान्तरम्—

ज र लगु
। ऽ । ऽ । ऽ । ऽ

"पुनातु भक्तिर-च्युता सदाऽच्युताङ्घ्रिपद्मयोः।
श्रुतिस्मृतिप्रमाणिका भवाम्बुराशितारिका ॥

अर्थ—श्रुति स्मृति में जिसका प्रमाण है ऐसी भवसिन्धु से पार करने वाली अच्युत भगवान के चरण-कमल की दृढ़ भक्ति मुझे पवित्र करे ।

तथा च सिद्धान्तशिरोमणौ—

ज. र. ल.गु.

। ऽ । ऽ । ऽ । ऽ

"मनुः क्ष-मानगै-र्युगैर्युगेन्दुभिश्च तैर्भवेत् ।
दिनं सरोजजन्मनो निशा च तत्प्रमाणिका ॥"

अर्थ—७१ महायुग का १ मनु और १४ मनुका ब्रह्मा का १ दिन होता है, और उतने ही प्रमाण की रात्रि भी होती है॥ ६ ॥

अथ विद्युन्मालाछन्दोलक्षणम्—

**सर्वे वर्णा दीर्घा यस्यां विश्रामः स्याद्वेदैर्वेदैः ।**
**विद्वद्वृन्दैर्वीणावाणि ! व्याख्याता सा विद्युन्माला ॥७॥**

अन्वयः—हे वीणावाणि ! यस्यां सर्वे वर्णाः दीर्घाः भवन्ति 'तथा' वेदैः वेदैः विश्रामः स्यात् सा विद्वद्वृन्दैर्विद्युन्माला व्याख्याता ॥७॥

व्याख्या—हे वीणावाणि = मधुरभाषिणि ! यस्यां = वृत्तौ सर्वे वर्णाः = अष्टावप्यक्षराणि दीर्घाः = द्विमात्रिकाः, 'भवेयुः' 'तथा वेदैर्वेदैः = चतुर्भिश्चतुर्भिरक्षरैः विश्रामः = विरामः स्यात्, सा विद्वद्वृन्दैः = पण्डितगणैः, विद्युन्माला = एतन्नामच्छन्दः, व्याख्याता = कथिता ॥ ७ ॥

समासः—वीणायाः वाणीव वाणी यस्याः सा वीणावाणी तत्सम्बोधने हे वीणावाणि ! । विदुषां वृन्दानि विद्वद्वृन्दानि तैः विद्वद्वृन्दैः ॥ ७ ॥

भाषार्थः—हे मधुरभाषिणि ! जिस ८ अक्षर के चरण वाले छन्द में सब अक्षर गुरु हों और चार चार अक्षर पर विश्राम हो उसको पण्डितगण विद्युन्माला कहते हैं ॥ ७ ॥

अत्र विशेषः—

विश्रामस्थानलक्षणं छन्दोमञ्जर्याम्—

"यतिर्जिह्वेष्टविश्रामस्थानं कविभिरुच्यते ।
सा विच्छेदविरामाद्यैः पदैर्वाच्या निजेच्छया ॥"

अर्थ—जिह्वा के इष्ट विश्राम स्थान ( अर्थात् जहाँ जिह्वा विश्राम करै उस ) को कविगण यति कहते हैं। उसी को विच्छेद, विराम, विश्राम आदि नाम से इच्छानुसार कह सकते हैं।

विद्युन्मालालक्षणं पिङ्गलसूत्रे—

"विद्युन्माला मौ गौ ।"

अर्थ—दो मगण और दो गुरु इस प्रकार ८ अक्षर के चरण वाले छन्द को विद्युन्माला कहते हैं ।

उदाहरणम्—

म म ग.ग.

ऽऽऽ ऽऽऽ ऽ ऽ

"विद्युन्मा-लालोभान् भोगान् मुक्त्वा मुक्तौ यत्नं कुर्यात् ।
ध्यानोत्पन्नं निःसामान्यं सौख्यं भोक्तुं यद्याकाङ्क्षेत् ॥"

अर्थ—यदि ध्यानगम्य सर्वोत्कृष्ट सुख भोग करने की इच्छा हो तो विद्युत् के सदृश क्षणिक लोभ और भोग को छोड़ कर मुक्ति के लिये यत्न करै ।

तथा लक्षणान्तरं छन्दोमञ्जरीवृत्तरत्नाकरयोः—

"मो मो गो गो विद्युन्माला ।"

अर्थ—उपरोक्त स्पष्ट है ।

उदाहरणान्तरम्—

म म ग.ग.

ऽऽऽ ऽऽऽ ऽ ऽ

"वासोत्र-छा विद्यु-न्माला बर्हश्रेणी शाक्रश्चापः ।
यस्मिन् स स्तात् तापोच्छित्यै गोमध्यस्थः कृष्णाम्भोदः ।"

अर्थ—जिन के ऊपर पीताम्बर विद्युल्लता सदृश, और मोरपक्ष इन्द्रधनुष के सदृश है वह गोवृन्द के मध्यस्थित जलद सदृश श्रीकृष्ण जी मेरे तापशान्ति के लिये हों ॥ ७ ॥

## अथ दशाक्षरवृत्ते चम्पकमालालक्षणम्—

**तन्वि ! गुरु स्यादाद्यचतुर्थं पञ्चमषष्ठं चान्त्यमुपान्त्यम् ।**
**इन्द्रियबाणैर्यत्र विरामः सा कथनीया चम्पकमाला ॥८॥**

अन्वयः—हे तन्वि ! यत्र आद्यचतुर्थं, पञ्चमषष्ठं, उपान्त्यं, अन्त्यं च गुरु स्यात्, तथा इन्द्रियबाणैः विरामः स्यात् सा चम्पकमाला कथनीया ॥ ८ ॥

व्याख्या—हे तन्वि! = कृशाङ्गि ! यत्र = यस्मिन् वृत्ते, आद्यचतुर्थं = प्रथमतुरीयं = प्रथमं चतुर्थं, तथा पञ्चमषष्ठं = पञ्चमं षष्ठं, उपान्त्यं = अन्त्यसमीपवर्ति = नवमं, अन्त्यं = चरणान्तस्थितं = दशमं च अक्षरं गुरु = द्विमात्रिकं स्यात् = भवेत्, तथा इन्द्रियबाणैः = पञ्चभिः पञ्चभिः 'अक्षरैः' विरामः = विरतिः स्यात् सा = एतल्लक्षणयुता चम्पकमाला = एतदभिधेया कथनीया = वक्तव्या ॥ ८ ॥

समासः—आद्यं च चतुर्थं चेत्याद्यचतुर्थम्। पंचमं च षष्ठं चेति पचमषष्ठम्। इन्द्रियाणि च बाणाश्चेतीन्द्रियबाणास्तैरिन्द्रियबाणैः ॥ ८ ॥

भाषार्थः—हे कृशाङ्गि ! जिसके प्रत्येक चरण में पहला, चौथा, पाँचवाँ, छठा, नववाँ और दशवाँ, अक्षर गुरु हो, और पाँच पाँच अक्षर पर विश्राम हो उस दश अक्षर के चरण वाले छन्द को चम्पकमाला कहते हैं ॥ ८ ॥

अत्र विशेषः—

आद्यबुधोक्ता रुक्मवती या सात्र निरुक्ता चम्पकमाला ।

अर्थ—आद्याचार्यों ने जिसको नाम रुक्मवती कहा है उसी को कवि कालिदास चम्पकमाला कहे है। कोई इसे रूपवती भी कहते हैं ।

तथा च पिङ्गलसूत्रे—

" रुक्मवती भ्मौ स्गौ " ।

अर्थ—एक भगण, एक मगण, एक सगण और एक गुरु क्रम से इस प्रकार जिस छन्द के प्रत्येक चरण में हो उसे रुक्मवती कहते हैं ।

तथा लक्षणं छन्दोमञ्जर्याम्—

" रुक्मवती सा यत्र भमस्गाः" ।

अर्थ—उपरोक्त स्पष्ट है ।

उदाहरणान्तरं पिङ्गलसूत्रे—

भ. म. स. ग.

S I I S S S I I S S

"पादत-ऊे पद्मो-दरगौ-रे राजति यस्या ऊर्ध्वगरेखा ।
सा भवति स्त्री लक्षणयुक्ता रुक्मवती सौभाग्यवती च ॥

अर्थ—जिसके कमल सदृश चरणों में ऊर्ध्वरेखा का चिह्न हो वह स्त्री शीलयुक्ता, धनवती और सौभाग्यवती होती है ।

तथोदाहरणान्तरम्—

भ. म. स. ग.

S I I S S S I I S S

"कायम-नोवाक्यैः परिशुद्धै-र्यस्य सदा कंसद्विपि भक्तिः।
राज्यपदे हर्म्यालिरुदारा रुक्मवती विघ्नं खलु तस्य॥"

अर्थ—जिसको तन मन और वचन से श्री कृष्णजी में भक्ति होती है उसे राज्यस्थान में बड़ी बड़ी सोने की हवेली मिलकर भक्ति में विघ्न के सदृश हो जाती है॥८॥

अथ नवाक्षरवृत्ते मणिबन्धच्छन्दोलक्षणम्—

**चम्पकमाला यत्र भवे-दन्त्यविहीना प्रेमनिधे ! ।**
**छन्दसि दक्षा ये कवयस्तन्मणिबन्धं ते ब्रुवते ॥ ९ ॥**

अन्वयः—हे प्रेमनिधे ! यत्र चम्पकमाला अन्त्यविहीना भवेत्, तत् ये कवयः छन्दसि दक्षाः ते मणिबन्धं ब्रुवते ॥९॥

व्याख्या—हे प्रेमनिधे! = स्नेहास्पदे ! यत्र = यस्मिन् वृत्ते चम्पकमाला = अनन्तरोक्ता, अन्त्यविहीना = अन्त्याक्षररहिता भवेत् तत् = नवाक्षरवृत्तं, ये कवयः = ये विद्वांसः छन्दसि = छन्दःशास्त्रे दक्षाः = निपुणाः ते मणिबन्धं = मणिबन्धसंज्ञं ब्रुवते = कथयन्ति ॥८॥

समासः—अन्त्येन विहीना = अन्त्यविहीना। प्रेम्नां निधिः प्रेमनिधिस्तत्सम्बोधने हे प्रेमनिधे ! ॥९॥

भावार्थः—हे प्रेमास्पदे ! चम्पकमालाछन्दके अन्त्य (दशम) अक्षर को निकाल देने से अवशिष्ट जो ९ अक्षर का चरण बचता है उसको जो छन्दःशास्त्र में कुशल हैं वे मणिबन्ध कहते हैं ॥९॥

अत्र विशेषः—

यन्मणिबन्धं प्राह कविस्तन्मणिमध्यं केऽपि जगुः।

अर्थ—जिस छन्दको यहाँ मणिमन्ध कहे हैं, उसी को कोई मणिमध्य भी कहते है।

तथा छन्दोमञ्जर्याम्—

"स्यान्मणिमध्यं चेद् भमसाः।"

अर्थ—यदि एक भगण एक मगण और एक सगण क्रम से हो उस नव (९) अक्षर के चरण वाले छन्द को मणिमध्य कहते हैं।

तथा चोदाहरणम्—

भ. म. स.

ऽ । । ऽ ऽ ऽ । । ऽ

"कालिय-भोगाभो-गगतस्तन्मणिमध्यस्फीतरुचा ।
चित्रपदाभो नन्दसुतश्चारु ननर्त स्मेरमुखः ॥"

अर्थ—कालियनाग के मस्तक पर उसके मस्तक के मणि की कान्ति से चित्रित चरणों से श्री कृष्ण जी हँसते हुए सुन्दर नाच किये ॥

तथा लक्षणान्तरम्—

"आद्यचतुर्थं पञ्चमकं षष्ठमथान्त्यं स्याद्व गुरु चेत् ।
इन्द्रियवेदैश्चेद्विरतिस्तन्मणिबन्धं प्राह फणी ॥"

अर्थ—जिस छन्द में पहिला, चौथा, पाँचवाँ, छठा, आठवाँ और नववां अक्षर गुरु हों उस नव ( ९ ) अक्षर के चरण वाले छन्द को पिङ्गल मुनि मणिबन्ध कहे हैं ॥ ९ ॥

अथ दशाक्षरवृत्ते हंसीछन्दोलक्षणं विवक्षुस्तस्य मन्दाक्रान्तालक्षणसम्बन्धत्वादादौ सप्तदशाक्षरवृत्ते मन्दाक्रान्तालक्षणम्—

**चत्वारः प्राक् सुतनु ! गुरवो द्वौ दशैकादशौ चे-
न्मुग्धे ! वर्णौ तदनु कुमुदामोदिनि ! द्वादशान्त्यौ ।
तद्वच्चान्त्यौ युगरसहयैर्यत्र कान्ते ! विरामो
मन्दाक्रान्तां प्रवरकवयस्तन्वि ! तां सङ्गिरन्ते ॥१०॥**

अन्वयः—हे सुतनु ! चेत् प्राक् चत्वारो गुरवः, तदनु दशैकादशौ द्वौ वर्णौ गुरू तथा हे कुमुदामोदिनि ! द्वादशान्त्यौ, तद्वत् अन्त्यौ अपि वर्णौ गुरू 'स्याताम्, तथा' हे कान्ते ! यत्र युगरसहयैः विरामः स्यात्, हे तन्वि ! प्रवरकवयः तां मन्दाक्रान्तां संगिरन्ते ॥ १० ॥

व्याख्या—'हे सुतनु' = सुकुमाराङ्गि ! चेत् = यदि, प्राक् = चरणादौ चत्वारः = प्रथमद्वितीयतृतीयचतुर्थाः वर्णा गुरवः = द्विमात्रिका भवन्ति तथा दशैकादशौ द्वौ वर्णौ गुरू स्याताम्, तथा हे कुमुदामोदिनि ! = चन्द्रवदने ! यदि द्वादशान्त्यौ = त्रयोदशचतुर्दशौ, तथाअन्त्यौ = षोडशसप्तदशौ वर्णौ च गुरू भवेताम्—तथा हे कान्ते ! यदि युगरसहयैः = चतुःषट्सप्तभिरक्षरैः, विरामः = विश्रामः स्यात

हेतन्वि ! = कृशाङ्गि ! प्रवरकवयः = श्रेष्ठविद्वांसः तां = उक्तलक्षणयुतां मन्द्राक्रान्तां = मन्दाक्रान्तानाम च्छन्दः सङ्गिरन्ते = कथयन्ति ॥१०॥

समासः—सुष्ठुतनूर्यस्याः स सुतनूस्तत्सम्बोधने हे सुतनु। दशमश्चैकादशश्चेति दशैकादशौ। कुमुदमामोदयतीति कुमुदामोदिनी तत्संबोधने हे कुमुदामोदिनि। युगाश्च, रसाश्च हयाश्चेति युगरस-हयास्तैर्युगरसहयैः। प्रवराश्च ते कवयश्चेति प्रवरकवयः ॥ १० ॥

भापार्थः—हे सुन्दरि ! जिसके प्रत्येक चरणों में आदि के चार ( प्रथम, द्वितीय, तृतीय, चतुर्थ ये ) अक्षर तथा दशवाँ और ग्यारहवाँ तथा तेरहवाँ और चौदहवाँ तथा सोरहवाँ सतरहवाँ ये अक्षर सब गुरु हों, बाँकी अक्षर लघु हों और क्रम से चार, छः, सात अक्षरों पर विश्राम हों ऐसे १७ अक्षर चरण वाले छन्द को कवि मन्दाक्रान्ता कहते हैं। यहाँ कुमुदामोदिनि, और तन्वि, कान्ते मुग्धे, ये सब सम्बोधन पद हैं ॥१०॥

अत्र विशेषः—

हंसीप्रवक्तुकामोऽपि लक्षणे लाघवादिह।
मन्दाक्रान्तां कविः प्राह वृत्तं सप्तदशाक्षरम् ॥

अर्थ—यहाँ ( दशाक्षरवृत्त प्रकरण में ) हंसी छन्द के लक्षण में लाघव होने के कारण कवि कालिदास ने १७ अक्षर चरण वाले मन्दाक्रान्ता छन्द का लक्षण पहले ही कहा।

अथ—मन्दाक्रान्तालक्षणान्तरं पिङ्गलसूत्रे—

"मन्दाक्रान्ता म्भौ न्तौ त्गौ ग् समुद्रर्तुस्वराः।"

अर्थ—जिसके प्रत्येक चरण में एक मगण, एक भगण, एक नगण, दो तगण, और दो गुरु इस क्रम से १७ अक्षर हो और ४, ६, ७, अक्षरों पर विश्राम हो उसे मन्दाक्रान्ता कहते हैं।

तथोदाहरणम्—

म. भ. न. तं. त. ग.ग.

ऽ ऽऽ ऽ।।।।।ऽ ऽ।ऽऽ। ऽ ऽ
तन्वी बाला कृश-तनुरियं त्यज्यतामत्र शङ्का।
दृष्टा काचिद् भ्रमरभरतो मञ्जरी भज्यमाना ॥

तस्मादेषा रहसि भवता निर्दयं पीडनीया।
मन्दाक्रान्ता बहुतररसं नो ददातीक्षुयष्टिः॥

अर्थ—कोई स्त्री किसी नायिका के विषय में नायक से कहती है—हे नायक! "यह बाला दुबली है" ऐसी शंका को छोड़ दो, क्यों कि—पुष्प की मञ्जरी कहीं भौंरे के भार से टूट सकती है? इसलिए तुम एकान्त में दयारहित होकर इसका आलिङ्गन करो, धीरे धीरे चूसने से ऊख बहुत रस नहीं देती है।

तथा लक्षणं छन्दोमञ्जर्याम्—

"मन्दाक्रान्ताऽम्बुधिरसनगैर्मो भनौ गौ ययुग्मम्।"

अर्थ—एक मगण, एक भगण, एक नगण, दो गुरु, दो यगण, इस प्रकार १७ अक्षर के चरण हो और ४, ६, ७ अक्षरों पर विश्राम हो उसे मन्दाक्रान्ता कहते हैं।

उदाहरणम्—

म. भ. न. ग.ग. य. य.
ऽऽऽऽ ।।।।।। ऽ ऽ ।ऽऽ। ऽऽ

"प्रेमालापैः प्रिय-वितरणैः प्री-णितालि-ङ्गनाद्यै-
र्मन्दाक्रान्ता तदनु नियतं वश्यतामेति बाला।
एवं शिक्षावचनसुधया राधिकायाः सखीनां
प्रीतः पायात् स्मितसुवदनो देवकीनन्दनो वः॥"

अर्थ—कोई सखी कृष्ण से कहती है—कि—मधुर वचन कहने से, प्रिय-वस्तु (वस्त्र, भूषण आदि) के देने से और धीरे धीरे आलिंगन आदि से प्रसन्न करने पर बाला स्त्री वश में आती है। इस प्रकार राधा की सखी के शिक्षा वचन-रूप अमृत से प्रसन्न होकर हँसते हुए कृष्णचन्द्र तुम्हारा पालन करें॥

तथा वृत्तरत्नाकरे लक्षणम्—

"मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद् गुरू चेत्।"

अर्थ—यदि एक मगण, एक भगण, एक नगण, दो तगण और दो गुरु अक्षर हो तथा ४, ६, ७ अक्षरों पर विश्राम हो इस प्रकार १७ अक्षर के चरण हो तो उसे मन्दाक्रान्ता कहते हैं॥

उदाहरण ऊपर स्पष्ट है॥१०॥

## अथ दशाक्षरवृत्ते हंसीछन्दोलक्षणम्—

**मन्दाक्रान्तान्त्ययतिरहिता सालङ्कारे? भवति यदि सा।**
**विद्वद्वृन्दैर्ध्रुवमभिहिता ज्ञेया हंसी कमलवदने!॥११॥**

अन्वयः—हे सालङ्कारे ! यदि मन्दाक्रान्ता अन्त्ययतिरहिता भवति, तदा हे कमलवदने ! विद्वद्वृन्दैः अभिहिता सा ध्रुवं हंसी ज्ञेया ॥ ११ ॥

व्याख्या—हे सालङ्कारे ! = भूषणविभूषिते ! मन्दाक्रान्ता = ( चत्वारः प्राक् सुतनु गुरव" इत्यादिलक्षणयुता ) = अनन्तरोक्ता = सप्तदशाक्षरपदात्मिका सा यदि अन्त्ययतिरहिता = अन्त्ययत्या सप्ताक्षरात्मिकया, रहिता = विहीना भवति ( अवशिष्टदशाक्षरचरणात्मिका भवतीत्यर्थः ) तदा हे कमलवदने = सरोजानने ! विद्वद्वृन्दैः पण्डितसमूहैः. अभिहिता कथिता सा ध्रुवं = निश्चितं हंसी = हंसीसंज्ञका, ज्ञेया = बोध्या ॥११॥

समासः—अन्ते भवाऽन्त्या सा च यतिश्चेत्यन्त्ययतिस्तया रहितेत्यन्त्ययतिरहिता। अलङ्कारेण सहितेति सालङ्कारा तत्सम्बोधने हे सालङ्कारे । विदुषां वृन्दानि विद्वद्वृन्दानि तैर्विद्वद्वृन्दैः। कमलमिव वदनं यस्याः सा कमलवदना तत्सम्बोधने हे कमलवदने ॥११॥

भावार्थः—हे सुन्दरी ! उपर जो १७ अक्षर के चरण और ४, ६, ७ अक्षरों पर विश्राम युक्त मन्दाक्रान्ता नामक छन्द कहा गया है। वह अन्तिम यति ( अर्थात् अन्त के ७ अक्षरों ) से रहित होने से केवल प्रत्येक चरण में दश अक्षर बचता है उसे कवि लोग हंसी छन्द कहते हैं ॥ ११ ॥

अत्र विशेषः—

मदीयं लक्षणान्तरम्—

चत्वारः प्राक् सुतनु ! गुरवो वाणैस्तुल्या यदि च लघवः ।
एकश्चान्त्ये तदनु च गुरुर्ज्ञेया हंसी कमलवदने ! ॥

अर्थ—प्रथम चार अक्षर गुरू बाद ५ अक्षर लघु अन्त में फिर एक गुरु इस प्रकार १० अक्षर के चरण वाले छन्द को हंसी समझना ।

लक्षणान्तरं वृत्तरत्नाकरपरिशिष्टे—

"ज्ञेया हंसी मभनगयुता ।"

अर्थ—एक मगण, एक भगण, एक नगण, और एक गुरु इस प्रकार १० अक्षर के चरण वाले छन्द को हंसी समझना ।

मदीयमुदाहरणान्तरम्—

म. भ. न. ग.

ऽ ऽ ऽ ऽ । । । । । ऽ
बाले के-लौ तव शुभग-तिं दृष्ट्वा लज्जावनतवदना ।
त्यक्त्वा पृथ्वीं सुरपुरसरो याता हंसी कमलवदने ! ॥

अर्थ—हे बाले ! क्रीड़ा में भी तुम्हारी जो सुन्दर चाल होती है उसे देख कर लज्जित होकर हंसी पृथ्वी को छोड़ कर स्वर्ग के सरोवर में चली गई ॥ ११ ॥

अथैकादशाक्षरवृत्ते शालिनीछन्दोलक्षणम्—

ह्रस्वो वर्णो जायते यत्र षष्ठः
कम्बुग्रीवे ! तद्वदेवाष्टमान्त्यः ।
विश्रामः स्यात्तन्वि ! वेदैस्तुरङ्गै-
स्तां भाषन्ते शालिनीं छान्दसीयाः ॥१२॥

अन्वयः—हे कम्बुग्रीवे ? यत्र षष्ठः, तद्वदेव, अष्टमान्त्यः, वर्णः 'अपि' ह्रस्वः, जायते 'तथा' हे तन्वि ! वेदैः, तुरङ्गैः, विश्रामः स्यात्, छान्दसीयाः तां शालिनीं भाषन्ते ॥ १२ ॥

व्याख्या—हे कम्बुग्रीवे ! = कम्बुवत् रेखात्रयविशिष्टकन्धरे ! यत्र = यस्मिन् छन्दसि, षष्ठः वर्णः = अक्षरं, ह्रस्वः = लघुः ( एकमात्रिकः ) जायते = भवति, तद्वदेव = तथैव, अष्टमान्त्यः = नवमः 'अपि' वर्णो 'यदि' ह्रस्वो जायते ( अर्थादन्ये वर्णा गुरवो यदि भवन्ति ) तथा हे तन्वङ्गि ! = कृशाङ्गि ! वेदैः = चतुर्भिः, तुरङ्गैः = सप्तभिः, 'वर्णैः यदि' विश्रामः = विरामः, स्यात् = भवेत् तदा छान्दसीयाः = छन्दःशास्त्रज्ञाः, तां = उक्तलक्षणसहितां शालिनीं = शालिनीसंज्ञकां भाषन्ते = कथयन्ति ॥ १२ ॥

समासः—कम्बुरिव = शङ्ख इव 'रेखात्रयविशिष्टा' ग्रीवा यस्याः सा कम्बुग्रीवा तत्सम्बोधने हे कम्बुग्रीवे । तनु = कृशं अङ्गं यस्याः सा-तन्वङ्गी तत्सम्बोधने हे तन्वङ्गि । अष्टमस्यान्त्यः = अष्टमान्त्यः । छन्दांसि विदन्तीति, छान्दसीयाः ॥ १२ ॥

भाषार्थः—जिस छन्द के प्रत्येक चरणों में छठा तथा नववाँ अक्षर ह्रस्व = एकमात्रिक, और शेष अक्षर गुरु हों, तथा ४,७ अक्षरों

पर विश्राम हो उस ११ अक्षर के चरण वाले छन्द को छन्द को जानने वाले शालिनी कहते हैं। यहाँ 'कम्बुग्रीवे' 'तन्वि' ये दोनों सम्बोधन हैं ॥ १२ ॥

अत्र विशेषः—

लक्षणान्तरं पिङ्गलसूत्रे—

"शालिनी म्तौ तगौ ग् समुद्र ऋषयः।"

अर्थ—जिस में एक मगण, दो तगण और दो गुरू क्रम से हों और ४, ७ पर विश्राम हो उसे शालिनी छन्द कहते हैं।

मदीयमुदाहरणम्—

म. त. त. ग.ग.

S S S S S । S S । S S

धर्माणां या पालि-नी शाश्व-तानां भूपाढ्यस्य श्रीरमेशस्य दृष्टिः।
नित्यं शोभाशालिनी सा दयार्द्रा पायाच्छुद्धां मैथिलीं चापि भाषाम् ॥

अर्थ—जो सर्वदा सनातनधर्मों की रक्षा करने वाली, शोभाशालिनी और दया से पूर्ण है वह भूपवन्द्य मिथिलेश श्री रमेश्वर सिंह की दृष्टि परम पवित्र मिथिला भाषा की भी रक्षा करै।

लक्षणं वृत्तरत्नाकरे—

"शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः।"

अर्थ—उपरोक्त स्पष्ट है।

तथा छन्दोमञ्जर्याम्—

"मात्तौ गौ चेच्छालिनी वेदलोकैः।"

अर्थ—उपरोक्त स्पष्ट है।

उदाहरणान्तरम्—

म. त. त. ग.ग.

S S S S S । S S । S S

अंहो ह-न्ति ज्ञान-वृद्धिं वि-धत्ते धर्मं धत्ते काममर्थं च सूते।
मुक्तिं दत्ते सर्वदोपास्यमाना पुंसां श्रद्धाशालिनी विष्णुभक्तिः ॥

अर्थ—श्रद्धासहित विष्णु की भक्ति सर्वदा उपासना करने से पाप को नाश करती है, मनुष्य को धर्म धारण कराती और काम, अर्थ, मुक्ति को देती है ॥१२॥

अथैकादशाक्षरवृत्ते दोधकवृत्तलक्षणम्— २

आद्यचतुर्थमहीननितम्बे ! सप्तमकन्दशमञ्च तथान्त्यम् ।
यत्र गुरु प्रकटस्मरसारे ! तत्कथितं ननु दोधकवृत्तम् ॥१३॥

अन्वयः—हे अहीननितम्बे ! यत्र आद्यचतुर्थं, सप्तमकं, च तथा अन्त्यं 'अक्षरं' गुरु स्यात्, हे प्रकटस्मरसारे ! तत् दोधकवृत्तं कथितम्, ननु ॥१३॥

व्याख्या—हे अहीननितम्बे != पीनकटिपश्चाद्भागे ! यत्र = यस्मिन् वृत्ते, आद्यचतुर्थं = प्रथमं चतुर्थं च तथा सप्तमकं = सप्तमं, दशमं, च = अपि, अन्त्यं = एकादशम्, 'अक्षरं' गुरु = द्विमात्रिकं स्यात्, हे प्रकटस्मरसारे = सञ्जातकामे ! तत् = उक्तलक्षणयुतं दोधकवृत्तं कथितं, ननु = निश्चयेनेति ॥१३॥

समासः—आद्यं च चतुर्थं चेत्याद्यचतुर्थम् । अहीनौ = पीनौ नितम्बौ = कटिपश्चाद्भागौ यस्याः सा अहीननितम्बा तत्सम्बोधने हे अहीननितम्बे !। स्मरस्य, सारः = वलं, स्मरसारः, प्रकटः स्मरसारो यस्याः सा प्रकटस्मरसारा तत्सम्बुद्धौ हे प्रकटस्मरसारे ॥१३॥

भाषार्थः—जिसके प्रत्येक चरण में पहिला, चौथा, सातवाँ, दशवाँ, और अन्तिम ( ग्यारहवाँ ) ये अक्षर गुरु (द्विमात्रिक) हों उसे 'दोधक' वृत्त कहते हैं । यहाँ 'अहीननितम्बे और प्रकटस्मरसारे' ये दोनो पद सम्बोधन हैं ॥१३॥

अत्र विशेषः—

लक्षणं पिङ्गलसूत्रे—

"दोधकं भौ भ्गौ ग्" ।

अर्थ—तीन भगण और दो गुरु जिसके प्रत्येक चरणों में हो वह दोधक वृत्त है।

उदाहरणम्—

भ. भ. भ. ग.ग.

ऽ। । ऽ। । ऽ। । ऽ।

दोधक-मर्थवि-रोधक-मुग्रं स्त्रीचपलं युधि कातरचित्तम् ।
स्वार्थपरं महिहीनममात्यं मुञ्चति यो नृपतिः स सुखी स्यात् ॥

अर्थ—धन को अपने तरफ खींचने वाला, विरोध करने वाला, क्रूर, शीलम्रष्ट, युद्ध में भयभीत, स्वार्थी, जिसके पास जमीन नहीं हो ऐसे मन्त्री को जो राजा छोड़ता है वह सुखी रहता है ॥

तथा लक्षणं वृत्तरत्नाकरे—

"दोधकवृत्तमिदं भभभाद् गौ

अर्थ—पिंगलसूत्रोक्तवत् स्पष्ट है।

तथा च च्छन्दोमञ्जर्याम्—

"दोधकमिच्छति भत्रितयाद् गौ"।

अर्थ—उपरोक्त स्पष्ट है।

उदाहरणान्तरम्—

भ. भ. भ. ग.ग.

ऽ। । ऽ। । ऽ। । ऽ ऽ

"देव! सदोध! कदम्बत–ऌस्थ! श्रीधर! तावक नामपदं मे।
कण्ठतलेऽप्युविनिर्गमकाले स्वल्पमपि क्षणमेष्यति योगम् ॥"

अर्थ—हे देव! बछड़ओंके साथ कदम्बवृक्ष के नीचे विहार करने वाले! हे श्रीधर! मरने के समय कुछ काल के लिये भी तुम्हारा नाम मेरे कण्ठ में वास करै ॥ १३ ॥

## अथेन्द्रवज्राछन्दोलक्षणम्—

यस्यां त्रिषट् सप्तममक्षरं स्याद्-
ह्रस्वं सुजंघे! नवमं च तद्वत्।
गत्या विलज्जीकृतहंसकान्ते!
तामिन्द्रवज्रां ब्रुवते कवीन्द्राः ॥ १४ ॥

अन्वयः—हे सुजंघे! यस्यां त्रिषट्सप्तमं, तद्वत् नवमं च अक्षरं ह्रस्वं स्यात्, हे गत्या विलज्जीकृतहंसकान्ते! कवीन्द्राः तां इन्द्रवज्रां ब्रुवते ॥ १४ ॥

व्याख्या—हे सुजंघे=शोभनोरुयुगले! यस्यां=यत्र वृत्तौ, त्रिषट्-सप्तमं = तृतीयषष्ठसप्तमम्, तद्वत् = तथैव नवमं च अक्षरं ह्रस्वं = लघु, स्यात् = भवेत्, हे गत्या विलज्जीकृतहंसकान्ते = गमनेन संकोचीकृतमरालप्रिये = तिरस्कृतहंसि! कवीन्द्राः = कविश्रेष्ठाः तां = उक्त-लक्षण युतां 'इन्द्रवज्रां' ब्रुवते = कथयन्ति ॥ १४ ॥

समासः—सुष्ठु = शोभने जङ्घे यस्याः सा सुजङ्घा तत्सम्बोधने हे सुजङ्घे। हंसस्य कान्ता 'प्रिया' इति हंसकान्ता = हंसी, गत्या = गमनेन विलज्जीकृता हंसकान्ता यया सा विलज्जीकृतहंसकान्ता तत्सम्बोधने विलज्जीकृतहंसकान्ते। तृतीयं च षष्ठं च सप्तमं चेति त्रिषट्सप्तमम्। कवीनामिन्द्राः कवीन्द्राः॥ १४॥

भाषार्थः—हे सुजङ्घे! जिसमें तीसरा, छठा, सातवाँ और नववाँ अक्षर ह्रस्व हों और शेष अक्षर गुरु हों ऐसे ११ अक्षर के चरण वाले छन्द को कविश्रेष्ठ जन इन्द्रवज्रा कहते हैं। यहाँ 'विलज्जीकृतहंस-कान्ते' यह भी सम्बोधन पद है॥१४॥

अत्र विशेषः—

लक्षणं पिङ्गलसूत्रे—

"इन्द्रवज्रा तौ जगौग्।"

अर्थ—जिसके प्रत्येक चरण में दो तगण, एक जगण और दो गुरु क्रम से हों वह इन्द्रवज्रा कहलाता है॥

मदीयमुदाहरणम्—

त. त. ज. ग. ग.

ऽऽ। ऽऽ।। ऽ। ऽऽ

अङ्गानि कञ्जादपि कोमलानि वाचः सुधास्वादुतराश्च कान्ते!।
चित्तं किमेतेषु गुणेषु सत्सु स्यादिन्द्रवज्रादपि दारुणं ते॥

अर्थ—हे कान्ते! तुम्हारे सब अङ्ग कमल से भी कोमल है और वाणी अमृत से भी मीठी है इतने गुण रहने पर भी तुम्हारा हृदय इन्द्र के वज्र से भी कठोर क्यों है। यहाँ प्रथम चरण के अन्तिम अक्षर (नि) विकल्प से गुरु माना गया है।

लक्षणं वृत्तरत्नाकरे—छन्दोमञ्जर्यां च—

"स्यादिन्द्रवज्रा यदि तौ जगौ गः।"

अर्थ—पिङ्गलसूत्रवत् स्पष्ट है।

उदाहरणम—

त. त. ज. ग. ग.

ऽऽ।ऽ ऽ।।ऽ। ऽऽ

"गोष्ठे गिरिं सव्यकरेण धृत्वा रुष्टेन्द्रवज्राहतिमुक्तवृष्टौ।
यो गोकुलं गोपकुलञ्च सुस्थं चक्रे स नो रक्षतु चक्रपाणिः॥"

अर्थ—व्रज पर रुष्ट होकर जब इन्द्र वज्रपात और वृष्टि करने लगे उस समय बायें हाथ से गोवर्धन पर्वत को उठा कर गायें और गोपों की जिसने रक्षा की वह चक्रपाणि ( श्रीकृष्ण ) मेरी भी रक्षा करें।

ममोदाहरणान्तरम्—

त. त. त. ग. ग.

ऽऽ।ऽऽ ।। ऽ । ऽऽ

दृष्टिर्दयार्द्रा विमला च बुद्धि-श्चित्तं द्रवत्यार्तजनं च दृष्ट्वा।
श्रीमद्रमे शावनिपस्य सन्धा स्यादिन्द्रवज्रादपि दारुणा किम्॥

अर्थ—श्रीमद्रमेश्वरसिंह महीपति की दृष्टि दया से आर्द्र, और बुद्धि अत्यन्त विमल है, और चित्त भी आर्तजन को देखकर द्रवित हो जाता है, परन्तु न जाने उनकी प्रतिज्ञा इन्द्र के वज्र से भी कठिन क्यों है? ॥१४॥

अथोपेन्द्रवज्राछन्दोलक्षणम्—

यदीन्द्रवज्राचरणेषु पूर्वे
भवन्ति वर्णा लघवः सुवर्णे!।
अमन्दमाद्यन्मदने! तदानी-
मुपेन्द्रवज्रा कथिता कवीन्द्रैः॥१५॥

अन्वयः—हे सुवर्णे! यदि, इन्द्रवज्राचरणेषु पूर्वे वर्णाः, लघवः, भवन्ति, तदानीं हे अमन्दमाद्यन्मदने! कवीन्द्रैः 'सा' उपेन्द्रवज्रा कथिता॥१५॥

व्याख्या—हे सुवर्णे! = सुकान्ते! यदि, इन्द्रवज्राचरणेषु = उपरोक्तेन्द्रवज्रायाश्चतुर्षु चरणेषु, पूर्वे वर्णाः प्रथमाक्षराणि, लघवः = ह्रस्वाः भवन्ति, तदानीं = तदा हे अमन्दमाद्यन्मदने! = अतिशयितकन्दर्पशालिनि! कवीन्द्रैः = कविश्रेष्ठैः 'सा' उपेन्द्रवज्रा कथिता = उक्ता॥१५॥

समासः—सुष्ठुवर्णो यस्याः सा सुवर्णा तत्सम्बोधने हे सुवर्णे! अमन्दं = अतिशयं माद्यन् = हृष्यन् मदनो यस्याः सा 'अमन्दमाद्यन्मदना तत्सम्बोधने हे अमन्दमाद्यन्मदने!। इन्द्रवज्रायाश्चरणाः = इन्द्रवज्राचरणास्तेषु इन्द्रवज्राचरणेषु। कवीनामिन्द्राः = कवीन्द्रास्तैः॥

भावार्थः—यदि इन्द्रवज्राछन्द के चारो चरण में प्रथम अक्षर ह्रस्व (एकमात्रिक) हो जाय तो उसे कविगण उपेन्द्रवज्रा कहते हैं। यहाँ 'सुवर्णे' और 'अमन्दमाद्यन्मदने' दोनों पद सम्बोधन हैं ॥१५॥

अत्र विशेषः—

लक्षणं पिङ्गलसूत्रे—

" उपेन्द्रवज्रा ज्तौ ज्गौ ग् " ।

अर्थ—जिसके प्रत्येक चरण में एक जगण, एक तगण फिर एक जगण और दो गुरु अक्षर हों तो उसे उपेन्द्रवज्रा कहते हैं ॥

उदाहरणम्—

ज त ज ग ग

।ऽ। ऽ ऽ। ।ऽ । ऽ ऽ

"भवन्नखाः कुन्ददलश्रि-यो ये नमन्ति लक्ष्मीस्तनलेखनेऽपि ।
उपेन्द्र ! वज्रादपि कर्कशत्वं कथं गतास्ते रिपुदारणायाम् ॥

अर्थ—हे उपेन्द्र ! (विष्णु) आपके कुन्दपुष्पसदृशकोमल जो नख श्री लक्ष्मी जी के स्तन पर नव जाता है, वही नख शत्रुओं को विदारने में वज्र से भी अधिक कर्कश क्यों हो जाता है ? ॥

लक्षणं वृत्तरत्नाकरे—

" उपेन्द्रवज्रा जतजास्ततो गौ " ।

अर्थ—उपरोक्त पिङ्गलसूत्र सदृश है ।

तथा छन्दोमञ्जर्याम्—

" उपेन्द्रवज्रा प्रथमे लघौ सा " ।

अर्थ—यदि इन्द्रवज्रा के चरणों का पहिला अक्षर ह्रस्व हो तो उपेन्द्रवज्रा कहलाता है ॥

ज त ज ग ग

।ऽ। ऽऽ। ।ऽ ।ऽ ऽ

"उपेन्द्र ! वज्रादिमणिच्छटाभि-र्विभूषणानां छुरितं वपुस्ते ।
स्मरामि गोपीभिरुपास्यमानं सुरद्रुमूले मणिमण्डपस्थम् ॥"

अर्थ—हे उपेन्द्र ! ( श्री कृष्ण ! ) वज्र ( हीरा ) आदि मणियों की शोभा से रञ्जित गोपियों से उपास्यमान कल्प वृक्षके नीचे मणिमण्डप में बैठे हुए आप के सुन्दर शरीर का मुझे स्मरण होता है ॥ १५ ॥

अथोपजातिच्छन्दोलक्षणम्—

यत्र द्वयोरप्यनयोस्तु पादा
भवन्ति सीमन्तिनि ! चन्द्रकान्ते ! ।
विद्वद्भिराद्यैः परिकीर्तिता सा
प्रयुज्यतामित्युपजातिरेषा ॥१६॥

अन्वयः—हे सीमन्तिनि ! चन्द्रकान्ते ! यत्र अनयोः द्वयोः अपि पादाः भवन्ति, सा एषा आद्यैः विद्वद्भिः परिकीर्तिता 'उपजातिः' इति प्रयुज्यताम् ॥ १६ ॥

व्याख्या—हे सीमन्तिनि ! विन्यस्तकेशपाशे ! हे चन्द्रकान्ते ! = शशिरुचे ! यत्र = यस्मिन् छन्दसि अनयोः = पूर्वोक्तयोः = इन्द्रवज्रोपेन्द्रवज्रयोः, द्वयोः = उभयोः, अपि पादाः = चरणाः भवन्ति, सा = उक्तलक्षणयुता एषा = इयं आद्यैः = प्राचीनैः विद्वद्भिः = पण्डितैः परिकीर्तिता = प्रोक्ता उपजातिः = उपजातिनामकं छन्दः, इति प्रयुज्यताम् = कथ्यताम् ॥ १६ ॥

समासः—सीमन्तः = केशवेशोऽस्या अस्तीति सीमन्तिनी तत्सम्बोधने हे सीमन्तिनि !। चन्द्रस्य कान्तिरिव कान्तिर्यस्याः सा चन्द्रकान्तिस्तत्सम्बोधने हे चन्द्रकान्ते ! ॥ १६ ॥

भावार्थः—हे सीमन्तिनि ! जिस छन्द में इन्द्रवज्रा और उपेन्द्रवज्रा दोनों छन्द के लक्षण युक्त चरण हों उसे प्राचीन पण्डित उपजाति नामक छन्द कहते हैं। यहाँ चन्द्रकान्ते यह भी सम्बोधन पद है ॥ १६ ॥

अत्र विशेषः—

लक्षणान्तरं पिङ्गलसूत्रे—

"आद्यन्तावुपजातयः।"

अर्थ—आदि (इन्द्रवज्रा) अन्त (उपेन्द्रवज्रा) ये दोनों मिश्रित होने से १४ प्रकार की उपजातियाँ होती है। इसीलिये यहाँ 'उपजातयः' बहुवचनप्रयोग है।

उदाहरणान्तरम्—

इन्द्रवज्रा इन्द्रवज्रा.

ऽऽ।ऽऽ।।ऽ।ऽऽ ऽऽ।ऽऽ।।ऽ।ऽऽ
"तत्रोपजातिर्विविधा विदग्धैः संयोज्यते तु व्यवहारकाले।

उपेन्द्रवज्रा उपेन्द्रवज्रा

। ऽ । ऽ ऽ । । ऽ । ऽ ऽ । ऽ । ऽ ऽ । । ऽ । ऽ ऽ

अतः प्रयत्नः प्रथमं विधेयो नृपेण पुंरत्न-परीक्षणाय ।

अर्थ—व्यवहार के समय में चतुर लोग अनेक प्रकार के उपजातियों (नक्कालों) को मिलाते हैं इसलिये पुरुष रत्न पीक्षा के लिये राजा को पहिले ही यत्न करना चाहिये ।

इसमें पूर्वार्ध दो चरण इन्द्रवज्रा के और उत्तरार्ध दो चरण उपेन्द्रवज्रा के है इसलिये उपजाति हुई ।

लक्षणं वृत्तरत्नाकरे छन्दोमञ्जर्याञ्च—

"अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः ।"

इत्थं किलान्यास्वपि मिश्रितासु वदन्ति जातिष्विदमेव नाम ॥

अर्थ—अनन्तर ( अव्यहित पूर्व ) जो इन्द्रवज्रा और उपेन्द्रवज्रा छन्द कहे गये हैं उन दोनों के लक्षण जिस छन्द के चरणों में हो वह उपजाति छन्द कहलाता है। इसी प्रकार दूसरे २ (तुल्याक्षरचरण) छन्दों के मिश्रित होने से उपजाति ही होती है। जैसे—इन्द्रवंशा और वंशस्थ के मिश्रत होने से भी १४ प्रकार की उपजातियाँ होंगी एवं सर्वत्र समझना ।

उदाहरण—

त. त. ज. ग.ग. त. त. ज. ग.ग.

ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ

"काचिन्मुरारे वदनारविन्दं संक्रान्तमालोक्य जले न-वोढा ।

त. त. ज. ग.ग. ज. त. ज. ग.ग.

ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ । ऽ । ऽ ऽ । । ऽ । ऽ ऽ

व्यक्तं सलज्जा परिचुम्बितुं तत् तदर्थमेवाम्भसि निर्ममज्ज ॥"

अर्थ—कोई व्रजयुवती यमुना जल में श्रीकृष्ण के मुख की छया (प्रतिबिम्ब) देखकर उसको चूमने के लिये जल में गोता लगाई। प्रयक्ष मुख चुम्बन में लज्जा के कारण परछाँही का चुम्बन की ।

इसमें पहला, दूसरा, तीसरा चरण इन्द्र वज्रा के और चौथा चरण उपेन्द्रवज्रा का है इस लिये यह भी उपजाति छन्द हुआ ॥

तथा चोपजातिलक्षणं वाणीभूषणे—

"उपेन्द्रवज्रापदसङ्गतानि यदीन्द्रवज्राचरणानि च स्युः ।

तदोजातिः कथिता कवीन्द्रैर्भेदा भवन्तीह चतुर्दशास्याः ॥

अर्थ—यदि इन्द्रवज्रा और उपेन्द्रवज्रा के चरण मिश्रित हो तो उसे कवि-श्रेष्ठ 'उपजाति' कहते हैं । इसका भेद १४ प्रकार है स्पष्टार्थ चक्र देखो ॥१६॥

## चतुर्दशोपजातिभेदचक्रम्—

| भेदाः | प्रथम चरण | द्वितीय चरण | तृतीय चरण | चतुर्थ चरण | प्राकृत-पिङ्गले | पिंगले कौस्तुभे | कालिदास-मतेन— |
|---|---|---|---|---|---|---|---|
| १ | उ. व. | इ. व. | इ. व. | इ. व. | कीर्तिः | ❀ | विपरीताख्यानकी |
| २ | इ. व. | उ. व. | इ. व. | इ. व. | वाणी | ❀ | आख्यानकी |
| ३ | उ. व. | उ. व. | इ. व. | इ. व. | माला | ❀ | विपरीताख्यानकी |
| ४ | इ. व. | इ. व. | उ. व. | इ. व. | शाला | ❀ | आख्यानकी |
| ५ | उ. व. | इ. व. | उ. व. | इ. व. | हंसी | विपरीताख्यानकी | विपरीताख्यानकी |
| ६ | इ. व. | उ. व. | उ. व. | इ. व. | माया | ❀ | आख्यानकी |
| ७ | उ. व. | उ. व. | उ. व. | इ. व. | जाया | ❀ | विपरीताख्यानकी |
| ८ | इ. व. | इ. व. | इ. व. | उ. व. | बाला | ❀ | आख्यानकी |
| ९ | उ. व. | इ. व. | इ. व. | उ. व. | आर्द्रा | ❀ | विपरीताख्यानकी |
| १० | इ. व. | उ. व. | इ. व. | उ. व. | भद्रा | आख्यानकी | आख्यानकी |
| ११ | उ. व. | उ. व. | इ. व. | उ. व. | प्रेमा | ❀ | विपरीताख्यानकी |
| १२ | इ. व. | इ. व. | उ. व. | उ. व. | रामा | ❀ | आख्यानकी |
| १३ | उ. व. | इ. व. | उ. व. | उ. व. | बुद्धिः | ❀ | विपरीताख्यानकी |
| १४ | इ. व. | उ. व. | उ. व. | उ. व. | ऋद्धिः | ❀ | आख्यानकी |

राजनीत्यनुसारेण चक्रमेतत् सुरक्षितम् ।
तेन नान्यैरिदं कैश्चिद्द रक्षणीयं स्वपुस्तके ॥

अथोपजातिभेदान्तर्गतयोः आख्यानकी-विपरीताख्यानकीछन्दशोर्लक्षणम्—

आख्यानकी स्यात्प्रकटीकृतार्थे !
यदीन्द्रवज्राचरणः पुरस्तात् ।
उपेन्द्रवज्राचरणास्त्रयोऽन्या
मनीषिणोक्ता विपरीतपूर्वा ॥१७॥

अन्वयः—हे प्रकटीकृतार्थे ! यदि पुरस्तात् इन्द्रवज्राचरणः, स्यात् 'तथा' त्रयं उपेन्द्रवज्राचरणाः 'यदि स्युस्तदा' आख्यानकी स्यात् । अन्या मनीषिणा विपरीतपूर्वा प्रोक्ता ॥१७॥

व्याख्या—हे प्रकटीकृतार्थे != स्फुटीकृताभिप्राये ! यदि पुरस्तात् = प्रथमः, इन्द्रवज्राचरणः = इन्द्रवज्राया एकः पादः स्यात् (एकवचनत्वात्) तथा अवशिष्टाः, त्रयः = द्वितीयतृतीयचतुर्थाः, उपेन्द्रवज्राचरणाः = उपेन्द्रवज्रालक्षणयुताः स्युः, तदा आख्यानकी = एतत्संज्ञकोपजतिः स्यात् । तथाऽन्या = एतद् विपरीतलक्षणयुता, अर्थात् प्रथम उपेन्द्रवज्राचरणः, त्रयोन्ये इन्द्रवज्राचरणास्तदा मनीषिणा = विदुषा विपरीतपूर्वा = विपरीताख्यानकी = एतदभिधेया वृत्तिः, उक्ता = कथिता ॥

किन्त्वेवमर्थः पिङ्गलसूत्रच्छन्दःकौस्तुभकारादिमतविरुद्धोऽत एवात्र यदि "उपेन्द्रवज्राचरणास्त्रयोऽन्या" इत्यत्र "उपेन्द्रवज्राचरणस्ततोऽन्या" एवं परिपर्त्य निम्नलिखितोऽर्थः क्रियते चेत्तदा सर्वसम्मतिकः स्यात् ।

वस्तुतस्तु कैश्चिच्छन्दोभेदानभिज्ञैः "आख्यानकी" त्यादौ एकमिन्द्रवज्रायाश्चरणं तत उपेन्द्रवज्राचरणत्रयं दृष्ट्वा—"उपेन्द्रवज्राचरणास्त्रयोऽन्ये" इत्यत्र "उपेन्द्रवज्राचरणास्त्रयोऽन्ये" एवं पाठं परिवर्त्यानर्थः प्रतिपादितः, ततः प्रभृत्यन्धपरम्परया वयमपि तमेवार्थमनुसरामः । अत एव "चरणास्त्रयोऽन्ये" "चरणास्त्रयोऽन्या" इति वा पाठः प्रामादिक एव प्रतिभाति । कथमन्यथा "मनीषिणोक्ता विपरीतपूर्वा" इत्यादिकं वदन्नपि कालिदासस्तन्मतविरोधी भवितुमर्हतीति विवेचनीयं विपश्चिद्भिः ।

अथवोपजातिभेदानां चतुर्दशानां मध्ये यत्र पुरस्तादिन्द्रवज्रा-

चरणस्ताः सप्ताख्यानकीसंज्ञकाः, यत्र पुरस्तात् ( प्रथमं )उपेन्द्रवज्रा-चरणस्ताः सप्त विपरीताख्यानकीसंज्ञकोपजातयः, इति कालिदासाभिप्रायश्चेत्तदा पिङ्गलाद्युक्तलक्षणस्यापि तदन्तर्गतत्वादेकता भवति। तथापि "उपेन्द्रवज्राचरणास्त्रयोन्ये" इत्येव पाठो निर्विवादतां भजति न च 'उपेन्द्रवज्राचरणाः" इति द्रष्टव्याधोलिखिता व्याख्या तथोपरि निर्दिष्टोपजातिभेदचक्रं च विलोक्यमित्यलं पल्लवितेन पुरस्तात् पण्डितानाम्॥ १७॥

समासः—प्रकटीकृतः = व्यक्तीकृतः, अर्थोऽभिप्रायो यया सा प्रकटीकृतार्था तत्सम्बोधने हे प्रकटीकृतार्थे! इन्द्रवज्रायाश्चरण इन्द्रवज्राचरणः। उपेन्द्रवज्रायाश्चरणा उपेन्द्रवज्राचरणाः। विपरीता चासौ पूर्वा चेति विपरीतपूर्वा ॥१७॥

भाषार्थः—यदि प्रथम चरण इन्द्रवज्रा और अवशिष्ट तीनों ( द्वितीय, तृतीय, चतुर्थ ये ) उपेन्द्रवज्रा हो तो आख्यानकी नामक उपजाति होती है। तथा इससे विपरीत दूसरी ( अर्थात् प्रथम उपेन्द्रवज्रा चरण फिर तीन इन्द्रवज्रा के चरण हो तो ) विपरीताख्यानकी नामक उपजाति होती है।

'पिंगलसूत्र' 'और छन्दःकौस्तुभ' में यदि विषम ( १।३ ) चरणों में इन्द्रवज्रा और सम ( २।४ ) चरणों में उपेन्द्रवज्रा हो तो 'आख्यानकी', और यदि विषम में उपेन्द्रवज्रा, सम चरण में इन्द्रवज्रा हो तो 'विपरीताख्यानकी' नामक उपजाति के लक्षण कहा है। इससे श्रुतबोध के उपरोक्त अर्थ में भेद पड़ता है। कालिदास उपजाति के लक्षण कहकर उसके सब भेद को नहीं बतलाये, केवल एकही पद्य में ( आख्यानकी और विपरीताख्यानकी ) इन दो भेदों को कहे हैं। यहां यदि 'चरणास्त्रयोऽन्या' के स्थान में 'चरणस्ततोऽन्या' ऐसा रखा जाय तो निम्नलिखित अर्थ सर्वसम्मतिक हो सकता है—यथा—

आख्यानकी स्यात् प्रकटीकृतार्थे
यदीन्द्रवज्राचरणः पुरस्तात्।
उपेन्द्रवज्राचरणस्ततोऽन्या
मनीषिणोक्ता विपरीतपूर्वा ॥

अस्य व्याख्या—हे प्रकटीकृतार्थे ? पुरस्तात् = प्रथमं, इन्द्रवज्रा-

चरणस्ततं उपेन्द्रवज्राचरणो यदि स्यात् तदा आख्यानकी स्यात्। 'तथा' अन्या=एतद्विरुद्धा (अर्थात् प्रथममुपेन्द्रवज्राचरणस्तत इन्द्रवज्राचरण एवं क्रमश्चेत् तदा मनीषिणा विपरीतपूर्वा=विपरीताख्यानकी उक्तेति ॥

भाषार्थ:—जिस उपजाति में प्रथम इन्द्रवज्रा तव उपेन्द्रवज्रा के पद इस क्रम से न्यास हो तो आख्यानकी। और यदि प्रथम उपेन्द्रवज्रा तव इन्द्रवज्रा के चरण इस क्रम से हो तो विपरीतख्यानकी नामक उपजाति होती है। इस प्रकार का अर्थ पिंगलादिकसम्मतिक है।

यदि ऐसा कहा जाय कि कालिदास जिन छन्दों के लक्षण कहे हैं वे उसी उसी छन्दों में, तो यहां भी पूर्वार्ध में आख्यानकी के लक्षण; और उत्तरार्ध में विपरीताख्यानकी के लक्षण होना चाहिये ?। किन्तु ऐसा कहना संगत नहीं। है—क्योंकि उपजाति के प्रकरण में किसी एक उपजाति में अनेकों उपजाति के लक्षण कह सकते हैं। नहीं तो हर एक छन्द में "कवयो वदन्ति" "मनीषिणोक्ता" (अर्थात् यह आदि कवियों ने कहा है) ऐसा कहकर भी कालिदास उन्ही छन्दःशास्त्रकर्ता महर्षि पिंगल आदि कवि से विरुद्ध कैसे कह सकते हैं।

अथवा चौदह (१४) उपजातियों में जिनके प्रथम चरण में इन्द्रवज्रा हो, वे ७ आख्यानकी, और जिनके प्रथम चरण में उपेन्द्रवज्रा हो वे सात (७) विपरीताख्यानकी नामक उपजातियां हैं, इस प्रकार कालिदास का अभिप्राय माना जाय तो निम्नलिखित अर्थ निर्विवाद हो सकता है। यथा—

आख्यानकी स्यात्प्रकटीकृतार्थे !
यदीन्द्रवज्राचरणः पुरस्तात् ।
उपेन्द्रवज्रा-चरणास्त्रयोऽन्ये
मनीषिणोक्ता विपरीतपूर्वा ॥

अस्य व्याख्या—हे प्रकटीकृतार्थे ! 'उपरोक्तोपजातिभेदेषु' यदि पुरस्तात्=प्रथमं, इन्द्रवज्राचरणः, 'तथा' त्रयः अवशिष्टचरणाः, अन्ये=केवलमुपेन्द्रवज्रायाः, उपेन्द्रवज्रेन्द्रवज्रयोर्मिश्रिता वा स्युस्तदा 'आख्यानकी' स्यात्। यदि च पुरस्तादुपेन्द्रवज्राचरणः, तथा त्रयः=द्वितीयतृतीयचतुर्थाः, अन्ये=केवलमिन्द्रवज्राया उपेन्द्रवज्रा-

मिश्रिता वा स्युस्तदा मनीषिणा = पिङ्गलादिमहर्षिवर्येण विपरीतपूर्वा = विपरीताख्यानकी, उक्ता = कथिता। अत्र "पुरस्तात्" इति देहलीदीपन्यायेनोभयत्रान्वेति। एवमर्थो निर्विवादः सर्वसम्मतिक इति द्रष्टव्यमुपजातिभेदचक्रम् ॥१७॥

भाषार्थः—१४ प्रकार की उपजातियों में यदि प्रथम इन्द्रवज्रा के चरण हो और अवशिष्ट तीन चरण अन्य (अर्थात् केवल उपेन्द्रवज्रा वा उपेन्द्रवज्रा इन्द्रवज्रा मिश्रित) हो तो, वे आख्यानकी कहलाती हैं। यदि प्रथम उपेन्द्रवज्रा के चरण हो, शेष तीन चरण केवल इन्द्रवज्रा वा उपेन्द्रवज्रा मिश्रित हो तो उन्हें पिङ्गलादि महर्षि गण विपरीताख्यानकी कहते हैं। इस प्रकार अर्थ सर्वसम्मति से निर्विवाद है। ऊपर उपजातिभेदचक्र देखो ॥१७॥

अत्र विशेषः—

मदीयमुदाहरणान्तरम्

इन्द्र वज्रा — उपेन्द्र वज्रा

S S I S S I I S I S S I S I S S I I S I S S

केचित्व-बु-द्धैव मतं कवीना-म बो-ध-सम्भ्रान्तधियो नवीनाः।
कृत्वा कुटीकां रचयन्त्यनर्थं स्वबुद्धिमत्वप्रतिपादनार्थम् ॥

अर्थ—कितने नवीन अपनी बुद्धिमत्ता दिखलाने के लिये कवि के आशय नहीं समझ कर मनमानी टीका करके अनर्थ करते हैं।

यह आख्यानकी नामक उपजाति का दशवाँ भेद है।

उपजातिभेदान्तर्गताख्यानकीलक्षणं पिङ्गलसूत्रे—
"आख्यानकी तौ ज्गौग्, ज्तौ ज्गौग्।"

अर्थ—जिसके विषम चरणों में दो तगण एक जगण और दो गुरु (अर्थात् इन्द्रवज्रा के चरण) हो तथा सम चरणों में जगण, तगण, जगण और दो गुरु (अर्थात् उपेन्द्रवज्रा के चरण) हो तो आख्यानकी नामक उपजाति होती है।

उदाहरणम्—

इन्द्रवज्रा — उपेन्द्रवज्रा

S S I S S I I S I S S I S I S S I I S I S S

"भृङ्गाव-ली मञ्ज-रु गीत-नादै-र्जनस्य चिरोमु-द मादधाति।
आख्यानकी च स्मरजन्मवार्ता-महोत्सवरम्यवणे क्वणन्ती ॥"

अर्थ—आमके वन में शब्द करती हुई भ्रमर की श्रेणी मङ्गल गीत नादों से जन के हृदय में कन्दर्प के जन्मवार्तामहोत्सव के आनन्द देती है।

यह उपजाति के दसवां भेद है, ऊपर चक्र देखो।

एवमेव छन्दः कौस्तुभे वृत्तरत्नाकरे च लक्षणम्—

"आख्यानकी तौ जगुरू ग ओजे, जतावनोजे जगुरू गुरुश्चेत्।"

अर्थ—पिङ्गल सूत्र के अर्थ सदृश स्पष्ट है। तथा यह उदाहरण रूप भी है।

विपरीताख्यानकीलक्षणं पिङ्गलसूत्रे—

"विपरीताख्यानकी जतौ ज्गौग्, तौ ज्गौग्।"

तथा छन्दःकौस्तुभे वृत्तरत्नाकरे च—

"जतौ जगौ गो विषमे, समे 'तौ जगौग' एषा विपरीतपूर्वा।"

अर्थ—यदि विषम चरणों में जगण तगण जगण और दो गुरु (अर्थात् उपेन्द्रवज्रा) हो तथा समचरणोंमें दो तगण एक जगण दो गुरु (अर्थात् इन्द्रवज्रा) हो तो विपरीताख्यानकी होती है। यह उदाहरण रूप भी है।

पिंगलसूत्रोक्तमुदाहरणम्—

उपेन्द्रवज्रा इन्द्रवज्रा

। ऽ । ऽ ऽ । । ऽ । ऽ ऽ · ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ

"अलं तवालीकवचोभिरेभिः स्वार्थे प्रिये ! साधय कार्यमन्यत्।

। ऽ । ऽ ऽ । । ऽ । ऽ ऽ ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ

कथं कथावर्णन कौतुकं स्या-दाख्यानकी चेद् विपरीतवृत्तिः।

अर्थ—हे प्रिये ! तुम्हारी मिथ्या बातों से कुछ प्रयोजन नहीं, तुम (स्वार्थ चाहने वाली हो) कोई दूसरा कार्य अपना साधन करो। जब आख्यानकी (वार्ता पहुँचाने वाली) ही उलटा व्यवहार करने लगेगी तो कथा-वर्णन में कौतुक कैसे हो।

यह उपजाति के ५ पाँचवाँ भेद प्राकृत पिंगल के मत से हंसी नाम की विपरीताख्यानकी है ॥१७॥

अथ रथोद्धताछन्दोलक्षणम्—

आद्यमक्षरमतस्तृतीयकं
सप्तमं च नवमं तथान्तिमम्।
दीर्घमिन्दुमुखि ? यत्र जायते
तां वदन्ति कवयो रथोद्धताम् ॥१८॥

अन्वयः—हे इन्दुमुखि ! यत्र, आद्यं, अतः, तृतीयकं, सप्तमं, नवमं, तथा च अन्तिमं, अक्षरं दीर्घं जायते, कवयः, तां रथोद्धतां वदन्ति ॥१८॥

व्याख्या—हे इन्दुमुखि ! = चन्द्रानने ! यत्र = यस्मिन् वृत्ते, आद्यं = प्रथमं, अतः = अस्मात् परं तृतीयकं, सप्तमं, नवमं, तथा च, अन्तिमं = एकादशं, अक्षरं, दीर्घं = द्विमात्रिकं, जायते = भवति, ( अर्थादेवान्यानि लघूनि स्युः ) कवयः = छन्दस्तत्त्वज्ञाः, तां = उक्तलक्षणयुतां रथोद्धतां = रथोद्धतानामकञ्छन्दः, वदन्ति = कथयन्ति ॥१८॥

समासः—इन्दुरिवमुखं यस्याः सा इन्दुमुखी तत्सम्बोधने हे इन्दुमुखि ! ॥१८॥

भाषार्थः—हे चन्द्रमुखि ! जिस छन्द में प्रथम, तृतीय, सप्तम नवम, और एकादश ये अक्षर दीर्घ ( द्विमात्रिक ) हो अर्थात् शेष अक्षर लघु हों तो कविगण उसे रथोद्धता नामक छन्द कहते हैं ॥१८॥

अत्र विशेषः—

लक्षणान्तरं पिङ्गलसूत्रे—

" रथोद्धता र्नौ र्लौ ग् ।"

अर्थ—जिस छन्द में रगण, नगण, रगण, एक लघु, एक गुरु क्रम से हो उसे रथोद्धता कहते हैं ।

लक्षणं वृत्तरत्नाकरे—

"रान्नराविह रथोद्धता लगौ ।"

अर्थ—पिं० सूत्रार्थ सदृश स्पष्ट है ।

लक्षणं छन्दोमञ्जर्याम्—

"रात्परैर्नरलगै रथोद्धता ।"

अर्थ—उपरोक्त पिं० सूत्रार्थ सदृश है ।

उदाहरणम्—

र.   न.   र.   ल.ग.

S I S I I I S I S I S.

या करोति विवि-धैर्वि-टैः समं,
सङ्गमं परगृहे रता च या ।
म्लानयत्युभयतोऽपि बान्धवान्
मार्गधूलिरिव सा रथोद्धता ॥"

अर्थ—जो स्त्री दूसरे पुरुषों के सङ्ग करती, या दूसरे के घर में रहती है वह दोनों ही हालत में अपने बन्धुओं को मलिन करती है, जैसे गाड़ियों के चलने से मार्ग की धूली ( धूर ) लोगों को मलिन कर देती है।

उदाहरणान्तरम्—

र न इ लग

ऽ। ऽ।।।ऽ।ऽ ।ऽ

राधिका दधिवि-लोडन-स्थिता
कृष्णवेणुनिनदैरथोद्धता।
यामुनं तटनिकुञ्जमञ्जसा
सा जगाम सलिलाहृतिच्छलात् ॥

अर्थ—राधिका दधिमथन करती हुई श्री कृष्ण की वंशी के शब्दों से उद्धता हो कर शीघ्रही पानी भरने के छल से यमुना के तट कुञ्जवन में चली गई ॥ १८ ॥

## अथ स्वागताछन्दलक्षणम्—

**अक्षरं च नवमं दशमं चेद्**
**व्यत्ययाद् भवति यत्र विनीते!।**
**प्रोक्तमेणनयने! यदि सैव**
**स्वागतेति कविभिः कथिताऽसौ ॥१९॥**

अन्वयः—हे विनीते! यत्र (रथोद्धतायां) प्रोक्तं नवमं, दशमं, अक्षरं चेत् यदि व्यत्ययात्, भवति तदा हे एणनयने! सैवासौ, कविभिः स्वागता, इति कथिता ॥ १९ ॥

व्याख्या—हे विनीते! = विनययुक्ते! यत्र = यदा रथोद्धत्तायां प्रोक्तं = कथितं नवमं, दशमंच (ऽ। गुरुलघुरूपं) अक्षरं, चेत् = यदि व्यत्ययात् = वैपरीत्यात् (अर्थात् क्रमेण लघुगुरु रूपं) भवति 'तदा' हे एणनयने? = हरिणलोचने! सैव = रथोद्धतैव, कविभिः = छन्दोविद्भिः, असौ 'स्वागता' इति कथिता = उक्ता॥ रथोद्धतायां नवमं गुरु, दशमं लघु, तथा स्वागतायां नवमं लघु, दशमं गुरु भवतीति भेदः ॥ १९ ॥

समासः—एणस्य नयने इव नयने यस्याः सा एणनयना तत्सम्बोधने हे एणनयने! ॥ १९ ॥

भावार्थः—हे मृगलोचने—यदि रथोद्धता छन्द में उक्त नवम, दशम, अक्षर विपरीत (अर्थात् रथोद्धता में नवम अक्षर गुरु और दशम लघु कहा गया है वहाँ नवम लघु और दशम अक्षर गुरु इस प्रकार उलटा ) हो जाय और अक्षर यथावत् रहे तो उसी को कविगण 'स्वागता' नामक छन्द कहते हैं ॥१६॥

अत्र विशेषः—

लक्षणं पिङ्गलसूत्रे—

"स्वागता र्नौ भ्गौ ग् ।"

अर्थ—१ रगण, १ नगण, १ भगण, दो गुरु इस प्रकार ११ अक्षर के चरण हो तो उसे स्वागता कहते हैं ।

लक्षणं वृत्तरत्नाकरे—

"स्वागतेति रनभाद् गुरुयुग्मम् ।"

अर्थ—उपरोक्त पिं० सूत्रोक्त सदृश है ।

लक्षणं छन्दोमञ्जर्याम्—

"स्वागता रनभगैर्गुरुणा च ॥"

अर्थ—पिङ्गलसूत्रार्थ सदृश स्पष्ट है ।

उदाहरणान्तरम्—

र. न. भ. ग. ग.

S I I I I I S I I S S

"यस्य चे-तसि स-दा सुर-वैरी

वल्लवीजन-विलास-विलोलः ।

तस्य नून-ममरालय-भाजः

स्वागता-दरकरः सुर-राजः ॥"

अर्थ—गोपीजन के विलास से चञ्चल श्रीकृष्णचन्द्र जिनके हृदय में रहते हैं निश्चय उस स्वर्गभागीजन के स्वागत और आदर स्वयं सुरराज करते हैं ॥१९॥

अथ द्वादशाक्षरवृत्ते वैश्वदेवीछन्दोलक्षणम्— 12 / 1

ह्रस्वो वर्णः स्यात्सप्तमो यत्र बाले !

तद्वद्बिम्बोष्ठि ! न्यस्त एकादशाद्यः ।

बाणैर्विश्रामस्तत्र चेत् स्यात्तुरङ्गै-

र्नाम्ना निर्दिष्टा सुभ्रु ! सा वैश्वदेवी ॥२०॥

अन्वयः—हे बाले! यत्र सप्तमः, वर्णः ह्रस्वः स्यात्, तद्वत् एकादशाद्यः, वर्णः न्यस्तः, 'चेत्' तथा हे विम्बोष्ठि! तत्र चेत् बाणैः, तुरङ्गैः, विश्रामः स्यात् तदा हे सुभ्रु! नाम्ना सा वैश्वदेवी निर्दिष्टा ॥२०॥

व्याख्या—हे बाले=नवीने! यत्र=यस्यां वृत्तौ, सप्तमो वर्णः ह्रस्वः=एकमात्रिकः स्यात्, तद्वत्=तथैव ह्रस्वरूप एव एकादशाद्यः=दशमः, वर्णः, न्यस्तः=स्थापितः, तथा हे बिम्बोष्ठि! तत्र चेत्=यदि बाणैः=पञ्चभिः, तुरङ्गैः=सप्तभिः, वर्णैः, विश्रामः=विरतिः स्यात् तदा हे सुभ्रु! नाम्ना=संज्ञया सा=उक्तलक्षणलक्षिता 'वैश्वदेवो' प्रदिष्टा=कथिता 'विद्वद्भि'रिति शेषः ॥ २० ॥

समासः—विम्बवत् ओष्ठौ यस्याः सा विम्बोष्ठी तत्सम्बन्धने हे बिम्बोष्ठि! एकादशस्याद्य एकादशाद्यः। सुष्ठु भ्रुवौ यस्याः सा सुभ्रूः, तत्सम्बोधने हे सुभ्रु! ॥ २० ॥

भाषार्थः—हे बाले! जिस छन्द में सातवां और दशवाँ अक्षर ह्रस्व (एकमात्रिक) हो और पाँच तथा सात अक्षरों पर विश्राम हो उसे वैश्वदेवी नामक छन्द कहते हैं ॥ २० ॥

अत्र विशेषः—

लक्षणं पिङ्गलसूत्रे—

"वैश्वदेवी मौ याविन्द्रिय ऋषयः।"

अर्थ—जिसके प्रत्येक चरणमें दो मगण, दो यगण हो और ५, ७ अक्षरों पर विश्राम हो उसे वैश्वदेवी छन्द कहते हैं।

लक्षणं वृत्तरत्नाकरे—छन्दोमञ्जर्यांच—

"बाणाश्वैश्छिन्ना वैश्वदेवी ममौ यौ।"

अर्थ—पिङ्गलसूत्रार्थं सदृश है।

उदाहरणम्—

म म. य. य.

ऽ ऽ ऽ ऽ ऽ ऽ। ऽ ऽ। ऽ ऽ

धन्यः पुण्यात्मा जायते क्वापि वंशे
तादृक् पुत्रोऽसौ येन गोत्रं पवित्रम्।
गोविप्रज्ञातिस्वामि-कार्ये प्रवृत्तः
शुद्धः श्राद्धादौ वैश्वदेवी भवेद्यः ॥

अर्थ—जो गो, ब्राह्मण, स्वजातिबन्धु और अपने स्वामी के कार्यमें प्रवृत्त रह कर श्राद्धादिक कर्मों में शुद्ध होकर वैश्वदेवविधि करते हैं ऐसे धन्य,

पुण्यात्मा पुत्र किसी वंश में उत्पन्न होते हैं जिनसे गोत्र ( कुल ) पवित्र होता है ॥ २० ॥

अथ तोटकच्छन्दोलक्षणम्—

सतृतीयकषष्ठमनङ्गरते !
नवमं विरतिप्रभवं गुरु चेत् ।
घनपीनपयोधरभारनते ?
ननु तोटकवृत्तमिदं कथितम् ॥२१॥

अन्वयः—हे, अनङ्गरते ! चेत् सतृतीयकषष्ठं, नवमं, विरतिप्रभवं च 'अक्षरं' गुरु स्यात्, तदा हे घनपीनपयोधरभारनते ? इदं तोटक-वृत्तं कथितं ननु ॥२१॥

व्याख्या—हे अनङ्गरते = कामप्रीतिशीले ! चेत् = यदि, सतृतीय-कषष्ठं = तृतीयसहितं षष्ठं, नवमं, विरतिप्रभवं = अन्तिमं = ( द्वादशं ) च, अक्षरं गुरु = द्विमात्रिकं स्यात्, तदा हे घनपीन-पयोधरभारनते = निविडस्थूलस्तनभारावनते । इदं = उक्तलक्षणयुतं, तोटक वृत्तं = तोटक संज्ञकं छन्दः कथितं = उक्तम्, ननु = निश्चयेन।२१।

समासः—अनङ्गे कामे रतिः प्रीतिर्यस्याः साऽनङ्गरतिः तत्सम्बोधने हे अनङ्गरते । तृतीयेन सहितं तत् षष्ठं चेति सतृतीयकषष्ठम् । घनौ निविडौ, पीनौ स्थूलौ च तौ पयोधरौ, इति घनपीनपयोधरौ, तयोः भारेण नतेति घनपीनपयोधरभारनता तत्सम्बोधने हे घनपीनपयोधर-भारनते । विरतिः प्रभवः ( स्थानं ) यस्य तत्, विरतिप्रभवम् ॥२१॥

भाषार्थः—हे कामशीले ! यदि तीसरा, छठा, नवमा, और बार-हवाँ अक्षर गुरु हो और शेष अक्षर लघु हो ऐसे १२ अक्षर के चरण वाले छन्द को तोटक कहते हैं ॥२१॥

अत्र विशेषः—

लक्षणं पिं० सूत्रे—

"तोटकं सः ।"

अर्थ—प्रत्येक पद में ४ सगण से तोटक होता है ।

वृत्तरत्नाकरे—

"इह तोटकमम्बुधिसैः प्रथितम् ।"

अर्थ—पिंगलसूत्रार्थ सदृश है ।

छन्दोमञ्जर्याम्—

"वद तोटकमब्धिसकारयुतम् ।"

अर्थ—जिसके प्रत्येक चरण में ४ सगण हो उसे तोटक कहो ॥

उदाहरणम्—

स स स स

। । ऽ । । ऽ । । ऽ । ऽ ऽ

जमुना-तटम-च्युत-के-लिकला—
लसदङ्घ्रिसरो-रुह-सङ्गरुचिम् ।
मुदितोऽट कलेरपनेतुमघं
यदि चेच्छसि जन्म निजं सफलम् ॥

अर्थ—यदि तुम कलियुग के पाप को हँटाने चाहते हौ और अपने जन्म को सफल करना चाहते हौ तो श्री कृष्ण भगवान् के चरण कमल के योग से पवित्र और सुशोभित जमुना के तट में जाकर भ्रमण करो ॥२१॥

## अथ भुजङ्गप्रयातच्छन्दोलक्षणम्—

**यदाद्यं चतुर्थं तथा सप्तमं स्यात्**
**तथैवाक्षरं ह्रस्वमेकादशाद्यम् ।**
**शरच्चन्द्रविद्वेषिवक्त्रारविन्दे !**
**तदुक्तं कवीन्द्रैर्भुजङ्गप्रयातम् ॥२२॥**

अन्वयः—हे शरच्चन्द्रविद्वेषिवक्त्रारविन्दे ! यदा, आद्यं, चतुर्थं, तथा सप्तमं तथैव, एकादशाद्यं, अक्षरं ह्रस्वं स्यात् 'तदा' कवीन्द्रैः तत् भुजङ्गप्रयातं, उक्तम् ॥२२॥

व्याख्या—हे शरच्चन्द्रविद्वेषिवक्त्रारविन्दे ! = शरदिन्दुसुन्दरवदनकमले ! यदा आद्यं = प्रथमं, चतुर्थं, तथा सप्तमं तथैव एकादशाद्यं = दशमम्, अक्षरं ह्रस्वं स्यात् ( अर्थादेव अन्यत् सर्वं लघु स्यात् ) तदा कवीन्द्रैः = छन्दोवित्तमैः तत् = उक्तलक्षणयुतं भुजङ्गप्रयातं = भुजङ्गप्रयातनामकं छन्दः, उक्तम् = कथितम् ॥२२॥

समासः—शरदश्चन्द्रः शरच्चन्द्रस्तस्य विद्वेषि वक्त्रं अरविन्दमिव यस्याः सा शरच्चन्द्रविद्वेषिवक्त्रारविन्दा तत्सम्बोधने हे शरच्चन्द्रविद्वेषिवक्त्रारविन्दे ! एकादशस्याद्यम् = एकादशाद्यम् । कवीनामिन्द्राः कवीन्द्रास्तैः कवीन्द्रैः ॥२२॥

भाषार्थः--हे सुमुखि ! यदि पहिला, चौथा, सातवाँ और दशवाँ अक्षर ह्रस्व हो ( अर्थात् शेष अक्षर गुरु हो ) ऐसे १२ अक्षर के चरण वाले छन्द को कविश्रेष्ठ भुजङ्गप्रयात कहते हैं ॥२२॥

अत्र विशेषः—

लक्षणं पिं० सूत्रे—

"भुजङ्गप्रयातं यः ।"

अर्थ—य ( अर्थात् ४ यगण ) जिसमें हो वह भुजङ्गप्रयात है।

वृत्तरत्नाकरे—

"भुजङ्गप्रयातं भवेद्यैश्चतुर्भिः ।"

अर्थ—पिं० सूत्रार्थतुल्य है।

छन्दोमञ्जर्याम्—

"भुजङ्गप्रयातं चतुर्भिर्यकारैः ।"

अर्थ—उपरोक्त स्पष्ट है।

उदाहरणम्—

य. य. य. य.

। ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ ऽ

"पुरः साधु वदृव्यक्ति मिथ्या-विनीतः
परोक्षे करोत्यर्थनाशं हताशः।
भुजङ्गप्रयातोपमं यस्य चित्तं
त्यजेत् तादृशं दुश्चरित्रं कुमित्रम् ॥"

अर्थ—जो सामने में मिथ्या ही नम्र होकर प्रियबात कहै और परोक्षमें कार्य-नाश करै और जिसका भुजंगप्रयात ( सर्प की गति ) सदृस कुटिल हृदय हो ऐसे कुमित्र को छोड़ देना चाहिये ॥२२॥

अथ द्रुतविलम्बितच्छन्दोलक्षणम्—

अयि कृशोदरि ! यत्र चतुर्थकं
गुरु च सप्तमकं दशमं तथा।
विरतिगं च तथैव विचक्षणै-
र्द्रुतविलम्बितमित्युपदिश्यते ॥२३॥

अन्वयः—अयि कृशोदरि ! यत्र चतुर्थकं च ( पुनः ) सप्तमकं, तथा दशमं, तथैव विरतिगं च, ( अक्षरं ) गुरु स्यात्, विचक्षणैः तत् 'द्रुतविलम्बितं' इत्युपदिश्यते ॥ २३ ॥

व्याख्या—अयि कृशोदरि = सुमध्यमे ?, यत्र = यस्मिन् वृत्ते चतुर्थं, च = पुनः सप्तमकं = सप्तमं, तथा दशमं, तथैव विरतिगं = चरणान्तिमं = ( द्वादशं ) च अक्षरं गुरु = द्विमात्रिकं स्यात्, विचक्षणैः = छन्दोविद्भिः पण्डितैः, तत् उक्तलक्षणकं 'द्रुतविलम्बितम्' = 'द्रुतविलम्बितनामकं छन्दः इत्युपदिश्यते = कथ्यते ॥ २३ ॥

समासः—कृशं उदरं यस्याः सा कृशोदरी तत्सम्बोधने हे कृशोदरि ! विरतौ गतं = विरतिगम् ॥ २३ ॥

भापार्थः—हे कृशोदरि ! जिस छन्द के प्रत्येक चरण में चौथा, सातवाँ, दशवाँ, और बारहवाँ अक्षर गुरु हो उस छन्द को पण्डितगण 'द्रुतविलम्बित' कहते हैं ॥२३॥

अत्र विशेषः—

लक्षणं पिं० सूत्रे—

"द्रुतविलम्बितं नभौ भ्रौ ।"

अर्थ—जिस छन्द के प्रत्येक चरण में नगण, भगण, भगण, रगण, क्रम से हो उसे द्रुतविलम्बित कहते हैं।

छन्दोमञ्जरीवृत्तरत्नाकरयोः—

"द्रुतविलम्बितमाह नभौ भरौ ।"

अर्थ—पिं० सूत्र के अर्थ सदृश है।

उदाहरणम्—

न भ भ र

। । । ऽ । । ऽ । । । । ऽ

द्रुतग- तिः पुरु- षो धन–भाजनं
भवति मन्दगतिश्च सुखोचितः ।
द्रुतविलम्बितखेलगतिर्नृपः
सकल-राज्यसुखं प्रियमश्नुते ॥"

अर्थ—द्रुतगति (शीघ्र गमन करने वाला) पुरुष धन का भागी होता है। और सुख चाहने वाला सदा मन्दगति रहता है। और समय समय पर शीघ्र तथा मन्द गति रखनेवाला राजा समस्त राज्यसुख का भोग करता है।

मदीयमुदाहरणान्तरम्—

न भ भ र

। । । ऽ । । ऽ । । ऽ । ऽ

जयति सा जननी शुधि या सदा
महिप—शुम्भमुखासुर—मर्दने।
द्रुतविलम्बितचारुगतिस्थिता
भगवती जगतीमभिरक्षितुम्॥

अर्थ—स्पष्ट।

तथा च—

नृपतिवन्द्यमहीपरमेश्वरः प्रतिनिजस्वविनिर्मितमन्दिरम्।
सुरगणापचिताविह राजते द्रुतविलम्बितचारुगतिस्थितः॥

र्थथ—स्पष्ट है॥ २३॥

अथ प्रमिताक्षराछन्दोलक्षणम्—

यदि तोटकस्य गुरु पञ्चमकं
विहितं विलासिनि ? तदक्षरकम्।
रससंख्यकं गुरु न चेदबले ?
प्रमिताक्षरेति कविभिः कथिता॥ २४॥

अन्वयः—हे विलासिनि ! यदि तोटकस्य पञ्चमकं, 'अक्षरं' गुरु विहितं; 'तथा' हे अबले ! रससंख्यकं तदक्षरकं गुरु न चेत्, 'तदा' कविभिः 'सा' 'प्रमिताक्षरा' इति कथिता। २४॥

व्याख्या—हे विलासिनि ! यदि तोटकस्य = "सतृतीयकषष्ठमि" त्यादिपूर्वोक्तस्य तोटकसंज्ञवृत्तस्य पञ्चमकं = पञ्चमम्, अक्षरं गुरु = द्विमात्रिकं विहितं = कृतं, तथा हे अबले ! रससंख्यकं = षष्ठं, तदक्षरकं = तस्य तोटकस्य अक्षरकं, गुरु न चेत् ( अर्थात् लघु ) स्यात् तदा कविभिः सा 'प्रमिताक्षरा' इति कथिता॥ २४॥

समासः—विलासो = विभ्रमोऽस्या अस्तीति विलासिनी तत्सम्बोधने हे विलासिनि ! न बलमस्त्यस्या इत्यबला तत्सम्बोधने हे अबले। अक्षरमेव, अक्षरकं तस्याक्षरकं = तदक्षरकम्॥ २४॥

भाषार्थः—हे विलासिनि ! यदि "सतृतीयक" इत्यादि पूर्वोक्त तोटक छन्द के प्रत्येक चरण का पाँचवाँ अक्षर गुरु कर दिया जाय, और छठा अक्षर को गुरु न करै अर्थात् लघु बना दिया जाय तो कविलोग उसे 'प्रमिताक्षरा' नामक छन्द कहते हैं ॥ २४ ॥

अत्र विशेषः—

लक्षणं पिं० सूत्रे—

"प्रमिताक्षरा स्जौ सौ ।"

अर्थ—जिस के प्रत्येक चरण में एक सगण, एक जगण, फिर दो सगण इस प्रकार १२ अक्षर हो वह प्रमिताक्षरा नामक छन्द है ॥

छन्दोमञ्जरीवृत्तरत्नाकरयोः—

"प्रमिताक्षरा सजससैः कथिता ।"

अर्थ—पिंगलसूत्रार्थ सदृश है ।

उदाहरणम्—

स ज स स

। । ऽ । ऽ । । । ऽ । । ऽ

अमृतस्य शीक-रमिवोद्गिरती

रदमौक्तिकांशुलहरीच्छुरिता ।

प्रमिताक्षरा मुररिपोर्भणिति—

र्व्रजसुभ्रुवामभिजहार मनः ॥

अर्थ—अमृतकणाको छीटती हुई दाँत रूपी मोती की छटा से रञ्जित श्री कृष्णकी थोड़ीसी बात व्रजयुवतियों का मन हरण कर ली ।

उदाहरणान्तरम्—

स. ज. स. स.

। । ऽ । ऽ । । । ऽ । । ऽ

त्रिमुहा-निनामनगराधिपतेः शिवशङ्कराख्य-नृपतेः सरसा ।

प्रमिताक्षरापि बहुलार्थयुता शुभभारती सुखयतीह जनान् ॥

अर्थ—त्रिमुहानीनामग्राम के अधिपति—श्री शिवशङ्कर शर्मा की अत्यन्त सुरस और विमल बहुल अर्थ से भरी हुई थोड़ी सी भी वाणी लोगों को सानन्द कर देती है ॥२४॥

अथ हरिणीप्लुताछन्दोलक्षणम्—

प्रथमाक्षरमाद्यतृतीययो-
र्द्रुतविलम्बितकस्य च पादयोः।
यदि चेन्न तदा कमलेक्षणे!
भवति सुन्दरि! सा 'हरिणीप्लुता' ॥२५॥

अन्वयः—हे कमलेक्षणे! यदि द्रुतविलम्बितकस्य आद्यतृतीययोः पादयोः प्रथमाक्षरं न चेत् स्यात्, तदा हे सुन्दरि! सा हरिणीप्लुता भवति ॥२५॥

व्याख्या—हे कमलेक्षणे! = सरोजलोचने! यदि द्रुतविलम्बितकस्य = "अयि कृशोदरि यत्र चतुर्थकं" इत्यादि-पूर्वोक्तस्य छन्दसः, आद्यतृतीययोः = प्रथमतृतीययोः पादयोः = चरणयोः, प्रथमाक्षरं = आद्यमक्षरं, न चेत् = न भवेत् चेत् यदि तदा हे सुन्दरि! सा "हरिणीप्लुता" = हरिणीप्लुतानामकं छन्दो भवति ॥२५॥

समासः—प्रथमं च तदक्षरं चेति प्रथमाक्षरम्। आद्यश्च तृतीयश्चेत्याद्यतृतीयौ, तयोः आद्यतृतीययोः। कमले इव ईक्षणे यस्याः सा कमलेक्षणा तत्सम्बोधने हे कमलेक्षणे ॥२५॥

भाषार्थः—हे सुन्दरि! यदि पूर्वोक्तद्रुतविलम्बित छन्दके प्रथम और तृतीय चरण के पहिला अक्षर न रहै (अर्थात् हटा दिया जाय) और सब यथावत् रहै तो वह हरिणीप्लुता नामक छन्द होता है॥२५॥

अत्र विशेषः—

लक्षणं पिङ्गलसूत्रे—

"हरिणप्लुता सौ स्लौग्, नभौ भरौ।"

अर्थ—यदि विषम चरण में ३ सगण, १ लघु और एक गुरु हो तथा सम चरण में १ नगण, २ भगण, और १ रगण क्रम से हो तो हरिणीप्लुता नामक छन्द होता है।

लक्षणं वृत्तरत्नाकरे—

"सयुगात् सलघू विषमे गुरु-
र्युजि नभौ भरकौ हरिणप्लुता।"

अर्थ—पिङ्गलसूत्रार्थं सदृश है।

मदीयमुदाहरणम्—

स स स लग न भ भ र

।।ऽ ।।ऽ ।।ऽ ।ऽ ।।। ऽ।। ऽ।। ऽ।ऽ

मिथिले-शरमे-शमही-पतिः कमपि कुप्यति चेदिह दुर्जनम् ।
निजरक्षकमन्यमपश्यतो भवति तस्य गतिर्हरिणप्लुता ॥

अर्थ—मिथिलेश श्रीरमेश्वरसिंह महीपति यदि कदाचित् किसी दुष्ट के उपर क्रोध करते हैं तो वह दुर्जन अपना रक्षक किसी दूसरे को न देख कर हरिण के सदृश भागता है ।

लक्षणं छन्दोमञ्जर्याम्—

"अयुजि प्रथमेन विवर्जितं
द्रुतविलम्बितकं हरिणप्लुता ।"

अर्थ—द्रुतविलम्बित छन्द के विषम (१,३) चरणों में प्रथम अक्षर निकाल दिया जाय और समचरण (२,४) यथावत् रहै तो हरिणप्लुता नामक छन्द होता है ।

उदाहरणम्—

स स स लग न भ भ र

।।ऽ।।ऽ ।।ऽ ।ऽ । ।।ऽ।। ऽ ।। ऽ।ऽ,

"स्फुटफे-नचया हरिण-प्लुता वलिम-नोज्ञत-टा तर-णेःसुता ।
कलहंस-कुलारवशालिनी विहरतो हरति स्म हरेर्मनः ॥"

अर्थ—स्पष्ट फेनके समूह है जिसमें, और हरिण की चाल के सदृश गति (उछलता हुआ तरङ्ग) है जिसमें ऐसी कल-हंस समूह के शब्द से शोभायमान यमुना नदी, विहार करने वाले श्रीकृष्ण के मन को हरण करली ॥ २५ ॥

अथ वंशस्थच्छन्दोलक्षणम्—

उपेन्द्रवज्राचरणेषु सन्ति चे-
दुपान्त्यवर्णा लघवः कृता यदा ।
मदोल्लसद्भ्रूजितकामकार्मुके !
वदन्ति वंशस्थमिदं बुधास्तदा ॥ २६ ॥

अन्वयः—हे मदोल्लसद्भ्रूजितकामकार्मुके ! उपेन्द्रवज्राचरणेषु

( चरणान्तेषु ) 'ये वर्णाः' सन्ति ते यदा लघवः तथा, उपान्त्यवर्णाः कृताः ( भवन्ति इति शेषः ) तदा बुधाः इदं वंशस्थं वदन्ति ॥२६॥

व्याख्या—हे मदोल्लसद्भ्रूजितकामकार्मुके ! = प्रमोदोल्लसितभ्रुकुटितिरस्कृतस्मरचापे ! उपेन्द्रवज्राचरणेषु = पूर्वोक्तोपेन्द्रवज्रायाश्चरणेषु ( लक्षणया चरणान्तेषु ) चतुर्षु 'ये वर्णाः' सन्ति, "सन्तीतिक्रियाबलात् 'ये वर्णाः' इत्यध्याहारः" ते यदा लघवः तथा उपान्त्यवर्णाः = अन्त्यसमीपस्थाः कृताः भवन्ति चेत् तदा बुधाः = पण्डिताः, इदं = द्वादशाक्षरचरणात्मकं, वंशस्थं = वंशस्थनामकं छन्दः, वदन्ति = कथयन्ति ॥२६॥

समासः—मदेन उल्लसन्त्यौ इति मदोल्लसन्त्यौ ते च ते भ्रुवौ इति मदोल्लसद्भ्रुवौ, ताभ्यां जितं कामस्य ( कन्दर्पस्य ) कार्मुकं (धनुः) यया सा मदोल्लसद्भ्रूजितकामकार्मुका तत्सम्बोधने हे मदोल्लसद्भ्रूजितकामकार्मुके। उपेन्द्रवज्रायाश्चरणा उपेन्द्रवज्राचरणास्तेषु उपेन्द्रवज्राचरणेषु। अन्त्यस्य समीपे वर्तन्ते इति उपान्त्याः उपान्त्याश्च ते वर्णाश्चेति उपान्त्यवर्णाः ॥२६॥

भाषार्थः—हे सुभ्रु ! यदि पूर्वोक्त उपेन्द्रवज्रा छन्दके प्रत्येक चरण के अंतिम ( ११ वाँ ) अक्षर ह्रस्व बनाकर उपान्तिम बनाया जाय ( अर्थात् उसके आगे एक अक्षर और रखा जाय ) तो इस प्रकार १२ अक्षर के चरण वाले छंद को पण्डितगण वंशस्थ कहते हैं ॥२६॥

अत्र विशेषः—

लक्षणं पिं० सूत्रे—

"वंशस्था ज्तौ ज्रौ।"

अर्थ—जिसके प्रत्येक चरण में १ जगण, १ तगण फिर १ जगण, १ रगण हों तो उसे वंशस्थ कहते हैं।

वृत्तरत्नाकरे—

"जतौ तु वंशस्थमुदीरितं जरौ।"

अर्थ—पिं० सूत्रार्थ सदृश है।

छन्दोमञ्जर्याम्—

"वदन्ति वंशस्थविलं जतौ जरौ।"

अर्थ—पिं० सूत्रार्थ वत् स्पष्ट है।

उदाहरणान्तरम्—

ज त ज र

।ऽ।ऽऽ।।ऽ।ऽ।ऽ

विलास-वंशस्थविलं मुखानिलैः
प्रपूर्य यः पञ्चमरागमुद्गिरन् ।
व्रजाङ्गनानामपि गानशालिनां
जहार मानं स पुनातु वो हरिः ॥

अर्थ—जिसने वंशी के छिद्रों को अपने मुख के श्वास से पूरा कर पञ्चमराग को गा कर गोपीगण, तथा नारदादि गायकों के मान हरण कर लिया वह श्री कृष्णजी तुम्हें पवित्र करें ॥२६॥

अथेन्द्रवंशाछन्दोलक्षणम्—

यस्यामशोकाङ्कुरपाणिपल्लवे !
वंशस्थपादा गुरुपूर्ववर्णकाः ।
तारुण्यहेलारतिरङ्गलालसे !
तामिन्द्रवंशां कवयः प्रचक्षते ॥ २७ ॥

अन्वयः—हे अशोकाङ्कुरपाणिपल्लवे ! यस्यां वंशस्थ-पादाः, गुरु-पूर्ववर्णकाः, 'भवन्ति' हे तारुण्यहेलारतिरङ्गलालसे ! कवयः तां, इन्द्र-वंशां प्रचक्षते ॥ २७ ॥

व्याख्या—हे अशोकाङ्कुरपाणिपल्लवे ! = अशोकाङ्कुरसदृशकर-किसलये ! यस्यां = वृत्तौ, वंशस्थपादाः = अनन्तरोक्तवंशस्थनामच्छन्द-श्चरणाः, गुरुपूर्ववर्णकाः = द्विमात्रिकप्रथमाक्षराः, भवन्ति, हे तारुण्य-हेलारतिरङ्गलालसे ! = यौवनकेलिसुरताभिलाषे ! कवयः, तां = उक्त-लक्षणयुतां इन्द्रवंशां = इन्द्रवंशानामकं छन्दः प्रचक्षते = कथ-यन्ति ॥ २७ ॥

समासः—अशोकस्याङ्कुरवत् पाणिपल्लवो यस्याः साऽशोकाङ्कुर-पाणिपल्लवा तत्सम्बोधने हे अशोकाङ्कुरपाणिपल्लवे !। तारुण्यस्य हेला = (हावविशेषः) इति तारुण्यहेला तया रतिरङ्गे लालसा यस्याः सा तारुण्यहेलारतिरङ्गलालसा तत्सम्बोधने हे तारुण्यहेलारति-

ङ्गलालसे। वंशस्थस्य पादाः, वंशस्थपादाः। गुरुः पूर्ववर्णको येषां ते। गुरुपूर्ववर्णकाः॥ २७॥

भाषार्थः—यदि उपरोक्त वंशस्थ छन्द के प्रत्येक चरण के पहिला अक्षर गुरु हो तो उसे कविगण इन्द्र वंशा नामक छन्द कहते हैं। यहाँ-तारुण्यहेलारतिरङ्गलालसे, और अशोकाङ्कुरपाणिपल्लवे ये दोनों सम्बोधन पद हैं॥ २७॥

अत्र विशेषः—

लक्षणं पिङ्गलसूत्रे—

"इन्द्रवंशा तौ ज्रौ।"

अर्थ—यदि दो तगण, एक जगग और एक रगण इस प्रकार १२ अक्षर के चरण हो तो उसे 'इन्द्रवंशा' नामक छन्द कहते हैं।

लक्षणं वृत्तरत्नाकरे—

"स्यादिन्द्रवंशा ततजै रसंयुतैः"

अर्थ—उपरोक्त पिं० सूत्रार्थ सदृश है।

छन्दोमञ्जर्याम्—

"तच्चेन्द्रवंशा प्रथमाक्षरे गुरौ।"

अर्थ—यदि 'वंशस्थ' छन्द के प्रथय अक्षर गुरु हो तो उसे इन्द्रवंशा कहते हैं।

उदाहरणम्—

त. त. ज. र.

ऽऽ। ऽऽ। ।ऽ। ऽ।ऽ

"कुर्वीत यो देव-गुरुद्वि-जन्मना—
मुर्वीप-तिः पात-नमर्थ-लिप्सया।
तस्येन्द्र-वंशेऽपि गृहीत-जन्मनः
संजाय-ते श्रीः प्र-तिकूलवर्तिनी॥"

अर्थ—जो राजा धन के लोभ से देवता, गुरु, ब्राह्मणका अपमान करता हैं। वह अगर इन्द्रके वंशमें भी जन्म लिया हो तो भी लक्ष्मी उसकी प्रतिकूल (रुष्ट) हो जाती है।

मदीयमुदाहरणान्तरम्—

त. त. ज. र.

ऽ ऽ । ऽ ऽ । । ऽ । ऽ । ऽ

श्रीमन्नृप-श्रील-रमेश्व-र प्रभो !
त्वत्सद्यशो वर्णयितुं क्षमोऽत्र कः ।
भूपेन्द्र ! वंशाब्जवनं द्विजन्मनां
सत्-शौर्य-सूर्येण विकाशितं त्वया ॥

अर्थ—अये श्रीमन् श्रीरमेश्वरसिंह 'प्रभो' आपके निर्मल यश के वर्णन कौन करसकता है, हे भूपेन्द्र ! आपने ब्राह्मणों के वंशरूप कमल वन को अपने पराक्रमरूप सूर्य से विकाशित कर दिया ॥२७॥

अथ त्रयोदशाक्षरवृत्ते 'प्रभावती'छन्दोलक्षणम्—

**यस्यां प्रिये ! प्रथमकमक्षरद्वयं**
**तुर्यं तथा गुरु नवमं दशान्तिकम् ।**
**सान्त्यं भवेद्यदि विरतिर्युगग्रहैः**
**सा लक्षिता ह्यमृतलते ! प्रभावती ॥२८॥**

अन्वयः—हे प्रिये ! यस्यां प्रथमकं अक्षरद्वयं, तुर्यं, नवमं तथा सान्त्यं दशान्तिकं 'अक्षरं' गुरु भवेत्, तथा हे अमृतलते ! यदि युगग्रहैः विरतिः भवेत्, सा प्रभावती लक्षिता ॥२८॥

व्याख्या—हे प्रिये ! = दयिते !, यस्यां = वृत्तौ, प्रथमकं अक्षरद्वयं = प्रथमं द्वितीयं च, तुर्यं = चतुर्थं, नवमं, तथा सान्त्यं = त्रयोदशसहितं, दशान्तिकं = एकादशं अक्षरं गुरु = द्विमात्रिकं भवेत् तथा हे अमृतलते ! मनोहराङ्गि ! यदि युगग्रहैः = चतुर्भिर्नवभिः 'अक्षरैः' विरतिः = विश्रामः, भवेत्, सा = उक्तलक्षणयुता 'प्रभावती' = प्रभावतीनामकं छन्दः, लक्षिता = कथिता ॥२८॥

समासः—अक्षरयोर्द्वयं अक्षरद्वयं । दशानामन्तिकं = दशान्तिकं । अन्त्येन सहितं सान्त्यम् । युगाश्च ग्रहाश्चेति युगग्रहास्तैः । अमृतस्य लता इव या साऽमृतलता तत्सम्बोधने हे अमृतलते ! ॥२८॥

भावार्थः—हे प्रिये ! जिस छन्द में प्रथम, द्वितीय, चतुर्थ, नवम एकादश, त्रयोदश, अक्षर गुरु हो और चार, और नव अक्षर पर विश्राम हो उसे 'प्रभावती' नामक छन्द कहते हैं ॥२८॥

अत्र विशेषः—

उदाहरणरूपं लक्षणं छन्दोमञ्जरी·प०—

त. भ. स. ज. ग.

ऽ ऽ । ऽ । । । । ऽ । ऽ । ऽ

एते क्र-मात्तभ सज-संज्ञकाग-णा
गश्चान्ततो यदि विहिता महीपते ! ।
वेदैर्ग्रहैर्यदि भवति यतिश्च शोभना
नागाधिपो वदति तदा प्रभावतीम् ॥

अर्थ—जिस छन्द के प्रत्येक चरण में क्रम से 'तगण, भगण, सगण जगण, और एक गुरु हो तथा ४, ९ अक्षरों पर विश्राम हो तो उसे पिंगलमुनि प्रभावती कहते हैं ॥२८॥

अथ प्रहर्षिणीछन्दोलक्षणम्—

आद्यं चेत्त्रितयमथाष्टमं नवान्त्यं
सोपान्त्यं गुरु विरतौ सुभाषिते ! स्यात् ।
विश्रामो भवति महेशनेत्रदिग्भि-
र्विज्ञेया ननु सुभगे ! प्रहर्षिणी सा ॥२९॥

अन्वयः—हे सुभाषिते ! चेत्, आद्यं त्रितयं, अथ अष्टमं, सोपान्त्यं, नवान्त्यं, विरतौ गुरु स्यात्, तथा महेशनेत्रदिग्भिः विश्रामो यदि भवति तदा हे सुभगे ! सा प्रहर्षिणी विज्ञेया ननु ॥२९॥

व्याख्या—हे सुभाषिते ! = प्रियवचने ! चेत् = यदि, आद्यं = प्रथमं, त्रितयं = अक्षरत्रयं = प्रथमं द्वितीयं तृतीयं चेत्यर्थः, अथ अनन्तरं सोपान्त्यं = द्वादशसहितं, अष्टमं, नवान्त्यं दशमम्, विरतौ = अन्ते च अक्षरं गुरु स्यात्. तथा महेशनेत्रदिग्भिः = त्रिभिर्दशभिश्च, विश्रामो = विरतिः, भवति तदा हे सुभगे ! = सौभाग्यवति ! सा उक्त-लक्षणयुता प्रहर्षिणी = प्रहर्षिणीसंज्ञका वृत्तिः, विज्ञेया = ज्ञातव्या ननु = निश्चयेन ॥२९॥

समासः—नवानामन्त्यं नवान्त्यम् । सुष्ठु भाषितं यस्याः सा सुभाषिता तत्सम्बोधने हे सुभाषिते ! उपान्त्येन सहितं सोपान्त्यम् । महेशनेत्राणि च दिशश्चेति महेशनेत्रदिशस्तैः, महेशनेत्रदिग्भिः ॥२९॥

भाषार्थः—हे मधुरभाषिणि ! यदि प्रत्येक चरणमें आदिके तीन ( पहिला, दूसरा, तीसरा ) आठवाँ, दशवाँ, बारहवाँ और तेरहवाँ अक्षर गुरु हो तथा तीन और दश अक्षरपर विश्राम हो उसे प्रहर्षिणी नामक छन्द समझना ॥२६॥

अत्र विशेषः—

लक्षणं पिं० सूत्रे—

"प्रहर्षिणी मनौ जरौग् त्रिकदशकौ ।"

अर्थ—जिसके प्रत्येक चरणमें १ मगण, १ नगण, १ जगण, १ रगण, और एक गुरु इस प्रकार १३ अक्षर और ३, १० अक्षरों पर विश्राम हो वह प्रहर्षिणी नामक छन्द है ।

वृत्तरत्नाकरे—

"म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम् ।'

अर्थ—उपरोक्त पिं० सूत्रार्थ सदृश है ।

छन्दोमञ्जर्याम्—

"त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम् ।"

अर्थ—उपरोक्त पिं० सूत्रके सदृश है ।

उदाहरणम्—

म. न. ज. र. ग.

S S S । । । । S । S । S S

उत्तुङ्ग-स्तनक-लश-द्व-योन्नताङ्गी
लोलाक्षी विपुलनितम्बशालिनी या ।
बिम्बोष्ठी नरवरमुष्टिमेयमध्या
सा नारी भवति मनःप्रहर्षिणीति ॥

अर्थ—जो स्त्री विशाल कुच युगल से उन्नत अङ्गवाली और स्थूल नितम्ब से शोभित हो, चञ्चल नेत्रवाली, बिम्ब सदृश अरुण ओष्ठ वाली, और मुट्ठी बराबर कटि ( डाँड़ ) वाली हो वह स्त्री मन को प्रसन्न करने वाली होती है ।

मदीयमुदाहरणान्तरम्—

म. न. ज. र. ग.

S S S । । । । S । S । S S

बालोऽपि-स्वयम-मलस्व-धर्मश-क्तः
सद्विद्यो निज-गुरु-देव-देश-भक्तः ।

श्रीकामेश्वर-नृपतेः सुकीर्ति-रेषा
केषां नो श्रुति-युगल-प्रहर्षिणीह ॥

अर्थ—अल्पतर वयस भी, स्वयं (विना किसी के आदेश ही से) अपने शुद्ध सनातन धर्म में आशक्त होकर सब प्रकार की विद्या को जानकर अपने गुरुजन, देव, और देश के भक्त हैं। श्री कामेश्वर सिंह नरेश की यह कीर्ति किसके श्रवण को हर्ष नहीं देती ? ॥२९॥

अथ चतुर्दशाक्षरवृत्ते वसन्ततिलकाछन्दोलक्षणम्—

आद्यं द्वितीयमपि चेद् गुरु तच्चतुर्थं
यत्राष्टमं च दशमान्त्यमुपान्त्यमन्त्यम् ।
कामाङ्कुशाङ्कुशितकामिमतङ्गजेन्द्रे !
कान्ते ! वसन्ततिलकां किल तां वदन्ति ॥३०॥

अन्वयः—हे कामाङ्कुशाङ्कुशितकामिमतङ्गजेन्द्रे ! हे कान्ते ! यत्र आद्यं, द्वितीयं, अपि, चतुर्थं, अष्टमं, दशमान्त्यं, उपान्त्यं, च अन्त्यं, तत् 'अक्षरं' गुरु चेत्, तदा तां किल वसन्ततिलकां वदन्ति ॥३०॥

व्याख्या—हे कामाङ्कशाङ्कशितकामिमतङ्गजेन्द्रे = कन्दर्पाङ्कुश-वशीकृतकामिकरिवरे ! यत्र = यस्यां वृत्तौ, आद्यं = प्रथमं, द्वितीयं, अपि = तथा चतुर्थं, अष्टमं, दशमान्त्यं = एकादशं, उपान्त्यं अन्त्यसमीपवर्ति, च = तथा अन्त्यं = चरणान्तस्थितं, तत् = अक्षरं, चेत् = यदि, गुरु = द्विमात्रिकं स्यात् तदा तां = उक्तलक्षणयुतां वसन्ततिलकां = वसन्ततिलकाख्यं छन्दः, वदन्ति = कथयन्ति, किल = निश्चयेन ॥३०॥

समासः—काम एवाङ्कुशस्तेनाङ्कुशिता वशीकृताः कामिन एव-मतङ्गजेन्द्राः यया सा कामाङ्कुशाङ्कुशितकामिमतङ्गजेन्द्रा तत्सम्बोधने हे कामाङ्कुशाङ्कशितकामिमतङ्गजेन्द्रे। दशमस्यान्त्यं दशमान्त्यम् ॥३०॥

भावार्थः—हे कान्ते ! जिस छन्द में पहिला, दूसरा, चौथा, आठवाँ एगारहवाँ, तेरहवाँ और चौहदवाँ अक्षर गुरु हो उसे वसंत-तिलका नामक छंद कहते हैं। यहाँ "कामांकुशाङ्कशित" इत्यादि सम्बोधन पद है ॥३०॥

अत्र विशेषः—

लक्षणं पिं० सूत्रे—

"वसन्ततिलका त्भौ जौ गौ।"

अर्थ—जिस छन्द के प्रत्येक चरण में, एक तगण, एक भगण, दो जगण और दो गुरु इस प्रकार १४ अक्षर हो उसे वसन्ततिलका नामक छन्द कहते हैं।

उदाहरणम्—

त. भ. ज. ज. ग.ग.

ऽ ऽ । ऽ । । । ऽ । । ऽ । ऽ ऽ

उद्धर्षिणी जनदृशां स्तनभा-रगुर्वी
नीलोत्पलद्युतिमलिम्लुचलोचना च।
सिंहोन्नतत्रिकतटी कुटिलालकान्ता
कान्ता वसन्ततिलका नृपवल्लभासौ॥ (सामुद्रिके)।

अर्थ—जनकी आँखों को आनन्ददेने वाली, स्तन के भार से झुकी हुई, नीलकमल सदृश नेत्र वाली, सिंह सदृश उन्नत त्रिवली हो जिसकी, केशोंके अग्र-भाग में कुटिलता हो जिसकी ऐसी कामिनी राजा की प्रिया (अर्थात् रानी) होती है॥

लक्षणं वृत्तरत्नाकरे—

"उक्ता वसन्ततिलका तभजा जगौ गः।"

अर्थ—पिंगल सूत्रार्थ सदृश है।

लक्षणं छन्दोमञ्जर्याम्—

"ज्ञेयं वसन्ततिलकं तभजा जगौ गः।"

अर्थ—उपरोक्त पिं० सूत्रार्थ सदृश है॥३०॥

अथ पञ्चदशाक्षरवृत्ते मालिनीछन्दोलक्षणम्—

प्रथममगुरुषट्कं विद्यते यत्र कान्ते!
तदनु च दशमं चेदक्षरं द्वादशान्त्यम्।
करिभिरथ तुरङ्गैर्यत्र कान्ते! विरामः
सुकविजनमनोज्ञा मालिनी सा प्रसिद्धा॥३१॥

अन्वयः—हे कान्ते! यत्र, प्रथमं षट्कं, अगुरु, तदनु दशमं,

द्वादशान्त्यं च, अक्षरं चेद्, अगुरु विद्यते, तथा हे बाले ! यत्र करिभिः, अथ तुरङ्गैः, विरामः स्यात्, सुकविजनमनोज्ञा सा 'मालिनी' इति प्रसिद्धा ॥३१॥

व्याख्या—हे कान्ते ! यत्र = यस्मिन् वृत्ते, प्रथमं = आदौ, षट्कं = आदितोऽक्षरषट्कं, अगुरु ह्रस्वं = एकमात्रिकं, तदनु = तत्पश्चात् दशमं, द्वादशान्त्यं = त्रयोदशं च अक्षरं चेत् = यदि, अगुरु = लघु, विद्यते = वर्तते, तथा हे बाले ! यत्र करिभिः = अष्टभिः, अथ तुरङ्गैः = सप्तभिः, विरामः = यतिः स्यात्, सुकविजनमनोज्ञा बुधजनहृदयज्ञा सा = उक्तलक्षणयुता, 'मालिनी' = मालिनीसंज्ञका, प्रसिद्धा = विख्याता ॥ ३१ ॥

समासः—न गुरु अगुरु । तस्मात् अनु = तदनु । द्वादशस्यान्त्यं = द्वादशान्त्यम् । सुष्ठु च ते कवयश्च ते एव जना इति सुकविजनाः तेषां मनोज्ञा, इति सुकविजनमनोज्ञा ॥ ३१ ॥

भावार्थः—हे कान्ते ! जिस छन्द में आदि से ६ अक्षर, बाद उस के दशवाँ और तेरहवाँ अक्षर ह्रस्व ( एक मात्रिक ) हो, शेष अक्षर गुरु हो और ८ तथा ७ अक्षरों पर विश्राम हो इस प्रकार १५ अक्षर हो तो उसे मालिनी नामक छन्द कहते हैं ॥३१॥

अत्र विशेषः—

लक्षणं पिं० सूत्रे—

"मालिनी' नौ म्यौ य् ।"

अर्थ—जिस छन्द के प्रत्येक चरण में दो नगण, एक मगण, दो यगण, इस प्रकार १५ अक्षर हों उसे मालिनी कहते हैं ।

छन्दोमञ्जरीवृत्तरत्नाकरयोः—

"ननमयय-युतेयं मालिनी भोगिलोकैः ।"

अर्थ—दो नगण, एक मगण, दो यगण इस प्रकार १५ अक्षर और ८,७ अक्षरों पर विश्राम हो तो उसे मालिनी छन्द कहते हैं ।

उदाहरणम्—

| न. | न. | म. | य. | य. |
|---|---|---|---|---|
| ।।। | ।।। | ऽऽऽ | ।ऽऽ | ।ऽऽ |

मृगम—दरस—चर्चा पी—त-कौ—पे—यवासाः

रुचिरशिखिशिखण्डा—बद्ध—धम्मिलपाशा ।

अनृजु निहितमंशे वंशमुत्-क्वाण-यन्ती
धृतमधुरिपुलीला मालिनी पातु राधा ॥"

अर्थ—अपने शरीर में कस्तूरी लगा कर और पीताम्बर धारण करके, माथे में मोरपक्ष बान्ध कर और माला धारण कर तिरछी होकर कन्धे पर वंशी को लेकर बजाती हुई जो राधिका श्री कृष्ण की लीला की वह मेरी रक्षा करै ॥३१॥

अथ सप्तदशाक्षरवृत्ते हरिणीछन्दोलक्षणम्—

**सुमुखि ! लघवः पञ्च प्राच्यास्ततो दशमान्तिक-**
**स्तदनु ललितालापे ! वर्णौ यदि त्रिचतुर्दशौ ।**
**प्रभवति पुनर्यत्रोपान्त्यः स्फुरत्करकङ्कणे !**
**यतिरपि रसैर्वेदैरश्वैः स्मृता हरिणीति सा ॥३२॥**

अन्वयः—हे सुमुखि ! यत्र प्राच्याः पञ्च वर्णाः लघवः, ततः दशमान्तिकः, वर्णः लघुः, तदनु हे ललितालापे ! यदि त्रिचतुर्दशौ वर्णौ लघू पुनः उपान्त्यः यदि लघुः प्रभवति, तथा हे स्फुरत्करकङ्कणे रसैः, वैदैः, अश्वैः यत्र यतिः अपि भवति सा हरिणी स्मृता ॥३२॥

व्याख्या—हे सुमुखि ! यत्र = यस्मिन् वृत्ते प्राच्याः = आद्याः, पञ्च वर्णाः = अक्षराणि, लघवः = ह्रस्वाः = एकमात्रिकाः भवन्ति, ततः = तत्पश्चात् दशमान्तिकः = एकादशः, वर्णः, लघुः, तदनु = तदनन्तरं, हे ललितालापे ! = मधुरभाषिणि ! यदि त्रिचतुर्दशौ = त्रयोदशचतुर्दशौ वर्णौ लघू 'भवतः' पुनः उपान्त्यः = षोड़शः वर्णः यदि लघुः प्रभवति, तथा हे स्फुरत्करकङ्कणे ! = भास्वद्धस्तविभूषणे ! रसैः = षड्भिः, वैदैः = चतुर्भिः, अश्वैः = सप्तभिः, यत्र यतिः = विरामः, अपि प्रभवति, सा = उक्तलक्षणयुता हरिणी स्मृता = कथिता ॥ ३२॥

समासः—सुष्ठु मुखं यस्याः सा सुमुखी तत्सम्बोधने हे सुमुखि ! दशमस्यान्तिकः दशमान्तिकः । स्फुरत् करे कङ्कणं यस्याः सा स्फुरत्करकङ्कणा तत्सम्बोधने हे स्फुरत्करकङ्कणे ! ॥३२॥

भावार्थः—हे सुमुखि ! जिस छन्द के प्रत्येक चरण में आदि से छः (६) अक्षर और एगारहवाँ, तेरहवाँ, चौदहवाँ और सोरहवाँ, अक्षर ह्रस्व हो शेष अक्षर गुरु हो तथा ६, ४, ७, अक्षरों पर विश्राम हो इस प्रकार १७ अक्षर हो तो उसे मालिनी नामक छन्द कहते हैं ॥३२॥

अत्र विशेषः—

लक्षणं पिं० सूत्रे—

"हरिणी न्सौ म्रौ स्लौग् ऋतुसमुद्रऋषयः ।"

अर्थः—जिसके प्रत्येक चरण में, क्रम से नगण, सगण, मगण, रगण, सगण और एक लघु एक गुरु हो और ६, ४, ७ अक्षरों पर विश्राम हो उसे हरिणी छन्द कहते हैं ॥

लक्षणं वृत्तरत्नाकरे—

रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा ।"

अर्थ—पिङ्गलसूत्रार्थसदृश है ।

छन्दोमञ्जर्याम्—

"नसमरसला गः षड्वेदैर्हयैर्हरिणी मता ।"

अर्थ—पिं० सूत्रवत् स्पष्ट है ।

उदाहरणम्—

न स म र स ल ग

। ।। । । ऽ ऽऽ ऽ ऽ ।ऽ । । ऽ । ऽ

व्यधित स विधि-र्नेत्रं नी-त्वा ध्रुवं हरिणी - गणाद्
व्रजमृगदृशी—सन्दोहस्योल्लसन्नयनश्रियम् ।
यदयमनिशं दूर्वाश्यामे मुरारिकलेवरे
व्यकिरदधिकं वद्धाकाङ्क्षं विलोलविलोचनम् ॥

अर्थ—विधाताने निश्चय हरिणीयों की आँख की शोभा ले कर गोपियों की आँख की शोभा बनायी है, जिस से ये गोपियां दूर्वादलसदृश श्यामवर्ण श्रीकृष्ण के शरीर पर दिन रात विशेषरूपसे दृष्टिपात करती हैं ॥ ३२ ॥

अथ शिखरिणीछन्दोलक्षणम्—

यदा प्राच्यो ह्रस्वः कमलनयने ! षष्ठकपरा-
स्ततो वर्णाः पञ्च प्रकृतिसुकुमाराङ्गि ! लघवः ।
त्रयोऽन्ये चोपान्त्यास्तदनु जघनाभोगसुभगे !
रसैरीशैर्यस्यां भवति विरतिः सा शिखरिणी ॥३३॥

अन्वयः—हे कमलनयने ! यदा प्राच्यः ( वर्णः ) ह्रस्वः स्यात्,

ततः हे प्रकृतिसुकुमाराङ्गि ! षष्ठकपराः पञ्च वर्णाः, लघवः, ततः अन्ये त्रयः उपान्त्याः वर्णाश्च यदि लघवः, तथा हे जघनाभोगसुभगे यस्यां रसैः, ईशैः विरतिः, भवति सा शिखरिणी ( ज्ञेया ) ॥३३॥

व्याख्या—हे कमलनयने = सरोजलोचने ! यदा प्राच्यः = प्रथमो वर्णः, ह्रस्वः स्यात, ततः = तत्पश्चात् हे प्रकृतिसुकुमाराङ्गि ! = सहजमृदुलशरीरे ! षष्ठकपराः = सप्तमाद्याः पञ्च वर्णाः लघवः = एकमात्रिकाः स्युः, तदनु = तत्पश्चात् अन्ये त्रयः उपान्त्याः = चतुर्दश-पञ्चदश-षोडशसंख्यकाः वर्णाश्च यदि लघवः = ह्रस्वा भवन्ति, तथा हे जघनाभोगसुभगे ! = जघनोत्कृष्टशोभाशालिनि ! यस्यां = वृत्तौ रसैः = षड्भिः, ईशैः = एकादशभिः, वर्णैः विरतिः = विश्रामो भवति, सा = उक्तलक्षणयुता 'शिखरिणी' ज्ञेया = बोध्या ॥ ३३ ॥

समासः—कमले इव नयने यस्याः सा कमलनयना तत्सम्बोधने हे कमलनयने ! षष्ठ एव षष्ठकः, षष्ठकात् परा इति षष्ठकपराः । प्रकृत्या सुकुमारं अङ्गं यस्याः सा प्रकृतिसुकुमाराङ्गी तत्सम्बोधने हे प्रकृतिसुकुमाराङ्गि । जघनयोराभोगः जघनाभोगस्तेन सुभगेति जघनाभोगसुभगा तत्सम्बोधने हे जघनाभोगसुभगे ! ॥३३॥

भावार्थः—हे सरोजाक्षि ! यदि प्रत्येक चरणमें पहिला, सातवाँ आठवाँ, नववाँ, दशवाँ, ग्यारहवाँ, चौदहवाँ, पन्द्रहवाँ और सोलहवाँ अक्षर ह्रस्व हो ( शेष अक्षर गुरु हो ) तथा ६, ११, अक्षरों पर विश्राम हो तो उसे शिखरिणी नामक छन्द समझना ॥ ३३ ॥

अत्र विशेषः—

लक्षणं पिङ्गलसूत्रे—

"शिखरिणी य्मौ न्सौ भ्लौग् ऋतुरुद्राः ।"

अर्थ—जिसके प्रत्येक चरणमें क्रमसे—यगण, मगण, नगण, सगण, भगण और एक लघु, एक गुरु और ६, ११ अक्षरों पर विश्राम हो उसे शिखरिणीनामक छन्द कहते हैं ।

छन्दोमञ्जरीवृत्तरत्नाकरयोः—

"रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी ।"

अर्थ—उपरोक्त पिङ्गलसूत्र सदृश है ।

उदाहरणम्—

य म न स भ ल. ग.

। ऽ ऽ ऽ ऽ ऽ । । । । । ऽ ऽ । । । ऽ

यशः-शे—षीभूते-जगति नरना—थे गुण—निधौ
प्रवृत्ते वैराग्ये विषयरस-निष्क्रान्त-मनसाम् ।
इदानीमस्माकं घनतरुलतानिर्भ्ररवतीं
तपस्तप्तुं चेतो भवति गिरिमालां शिखरिणीम् ॥

अर्थ—संसारमें गुणवान् राजा के नहीं रहने से, विषय रससे निस्पृह हमलोगों को वैराग्य होने पर इस समय वहुत वृक्ष लता और नदीकी झरना जहाँ है ऐसी पहाड़ियों में जाकर तपस्या करने का मन होता है ॥ ३३ ॥

अथ पृथ्वीछन्दोलक्षणम्—

द्वितीयमलिकुन्तले ! यदि षडष्टमं द्वादशं
चतुर्दशमथ प्रिये ! गुरु गभीरनाभिह्रदे ! ।
सपञ्चदशमन्तिकं तदनु यत्र कान्ते ! यतिः
*करीन्द्रफणभृत्कुलैर्भवति सुभ्रु ! पृथ्वी हि सा ॥३४॥

अन्वयः—हे अलिकुन्तले ! यदि द्वितीयं, षडष्टमं, द्वादशं, चतुर्दशं, अथ हे प्रिये ! गभीरनाभिह्रदे ! सपञ्चदशं, अन्तिकं, 'अक्षरं' गुरु स्यात् तथा हे कान्ते ! तदनु यत्र करीन्द्रफणभृत्कुलैः यतिः, भवति हे सुभ्रु ! सा 'पृथ्वी' ज्ञेया हि ॥ ३४ ॥

व्याख्या—हे अलिकुन्तले ! = भ्रमरवत्श्यामलशिरोरुहे ! यदि द्वितीयं, षडष्टमं = (षष्ठं, अष्टमं च) द्वादशं, चतुर्दशम्, अथ = अनन्तरं, हे प्रिये ! हे गभीरनाभिह्रदे ! = निम्ननाभिकूपे ! सपञ्चदशं = पञ्चदश-सहितं, अन्तिकं = अन्तिमं = सप्तदशं अक्षरं, गुरु = द्विमात्रिकं स्यात्,

---

* बहुषु पुस्तकेषु "गिरीन्द्रफणिभृत्कुलैः" इति प्रामादिकाः पाठोऽनभिज्ञैः प्रक्षिप्तः । यतो गिरीन्द्राः कुलाचलाः सप्तैव । तथा फणिभृतो रुद्रा एकादश, तस्मात् "गिरीन्द्रफणिभृत्कुलैः = अष्टनवभिः, एवमर्थः कथं साधुतां गन्तुमर्हति ।

यदि च "गिरीन्द्रफणिभिः कुलैः । एवं पाठः कल्प्यते तदा—कुं एकसंख्यां लान्ति गृह्णन्तीति कुला एकसहितास्तैः कुलैरेकसहितैः—गिरीन्द्रफणिभिः । एवं अष्टभिर्नवभिरित्यर्थः कर्तुं शक्यते । इति ॥

५

तथा हे कान्ते ! तदनु = तदनन्तरं यत्र = यस्यां वृत्तौ करीन्द्रफणभृत्कुलैः = अष्टभिर्नवभिः 'वर्णैः' यतिः = विरतिः, भवति, हेसुभ्रु ! सा = उक्तलक्षणयुता 'पृथ्वी' ज्ञेया ॥ ३४ ॥

समासः—अलिवत् श्यामलाः कुन्तलाः केशाः यस्याः सा अलिकुन्तला तत्सम्बोधने हे अलिकुन्तले !। नाभिरेव ह्रदो नाभिह्रदः, गभीरो नाभिह्रदो यस्याः सा गभीरनाभिह्रदा तत्सम्बोधने हे गभीरनाभिह्रदे !। पञ्चदशेन सहितं सपञ्चदशम्। करीन्द्राश्च फणभृत्कुलानि-चेति करीन्द्रफणभृत्कुलानि तैः करीन्द्रफणभृत्कुलैः। सुष्ठु भ्रुवौ यस्याः सा सुभ्रूस्तत्सम्बोधने ! हे सुभ्रु ! ॥ ३४ ॥

भावार्थः—हे सुकेशि ! यदि प्रत्येक चरण में दूसरा, छठा, आठवाँ, बारहवाँ, चौदहवाँ, पन्द्रहवाँ, और अन्तिम ( सतरहवाँ ) अक्षर गुरू हो तथा आठ और नव अक्षर पर विश्राम हो तो पृथ्वी नामक छन्द होता है ॥ ३४ ॥

अत्र विशेषः—

लक्षणं पिङ्गलसूत्रे—

"पृथ्वी ज्सौ ज्सौ य्लौ ग् वसुनवकौ ।"

अर्थ—जिस छन्द के प्रत्येक चरण में क्रम से जगण, सगण, जगण, सगण, यगण, और एक लघु एक गुरु हो तथा ८, ९ अक्षरों पर विश्राम हो वह पृथ्वी-नामक छन्द होता है।

छन्दोमञ्जरीवृत्तरत्नाकरयोः—

"जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः ।"

अर्थ—पिङ्गलसूत्रार्थ सदृश है।

उदाहरणम्—

ज. स. ज. स. य. ल. ग.

।ऽ। ।।ऽ ।ऽ। ।।ऽ ।ऽ ऽ ।ऽ

दुरन्त–दनुजे–श्वर प्र–कर दुःस्थपृ–थ्वी·भरं
जहार निजलीलया यदुकुलेऽवतीर्याऽशु यः ।
स एव जगतां गतिर्दुरितभारमस्माद्दृशां
हरिष्यति हरिः स्तुतिस्मरणचाटुभिस्तोषितः ॥

अर्थ—जो यदुकुल में अवतार लेकर दुष्ट दैत्यों के समूह से दुःखिता पृथ्वी

का भार अपनी लीला से शीघ्रही हरण किये, वही श्रीकृष्णजी स्तुति की प्रिय-वाणी से प्रसन्न होकर हम लोगों के पापों का भार हरण करेंगे ॥३४॥

अथैकोनविंशत्यक्षरवृत्ते 'शार्दूलविक्रीडित'लक्षणम्—

**आद्याश्चेद् गुरवस्त्रयः प्रियतमे ! षष्ठस्तथा चाष्टमः**
**सन्त्येकादशतस्त्रयस्तदनु चेदष्टादशाद्यान्तिमाः ।**
**मार्तण्डैर्मुनिभिश्च यत्र विरतिः पूर्णेन्दुबिम्बानने !**
**तद्वृत्तं प्रवदन्ति काव्यरसिकाः शार्दूलविक्रीडितम् ॥३५॥**

अन्वयः—हे प्रियतमे ! चेत् आद्याः, त्रयः गुरवः, तथा च षष्ठः, अष्टमः, एकादशतः त्रयः, तदनु अष्टादशाद्यान्तिमाः 'वर्णाः' चेद् गुरवः सन्ति, च (पुनः) यत्र मार्तण्डैः, मुनिभिश्च विरतिः स्यात्, हे पूर्णेन्दुबिम्बानने ! काव्यरसिकाः, तद् वृत्तं 'शार्दूलविक्रीडितम्, प्रवदन्ति ॥३५॥

व्याख्या—हे प्रियतमे ! चेत् = यदि, आद्याः = प्रथमाः त्रयः = (प्रथमद्वितीयतृतीयाः) वर्णाः गुरवः = द्विमात्रिकाः तथा च षष्ठः, अष्टमः, एकादशत : त्रयः = द्वादशत्रयोदशचतुर्दशाः, तदनु तत्पश्चात् अष्टादशाद्यान्तिमाः = षोडशसप्तदशैकोनविंसतिसंख्यकाः वर्णाः चेत् = यदि गुरवः संति, च = पुनः, यत्र मार्तण्डैः = द्वादशभिः, मुनिभिः = सप्तभिश्च वर्णैः, विरतिः = विश्रामः स्यात्, हे पूर्णेन्दुबिम्बानने ! = सम्पूर्णशशिमुखि ! काव्यरसिकाः = कवयः, तद्वृत्तं शार्दूलविक्रीडितं प्रवदन्ति = कथयन्ति ॥३५॥

समासः—अष्टादशस्याद्यौ चान्तिमश्चेति अष्टादशाद्यान्तिमाः। पूर्णश्चासाविन्दुश्चेति पूर्णेन्दुस्तस्य बिम्बमिवाननं यस्याः सा पूर्णेन्दु-बिम्बानना तत्सम्बोधने हे पूर्णेन्दुबिम्बानने ! काव्येषु रसिकाः काव्य-रसिकाः ॥३५॥

भाषार्थः—हे प्रियतमे ! जिस छन्द के प्रत्येक चरणमें आदिके तीन (पहिला, दूसरा, तीसरा) छठा, आठवाँ, बारहवाँ, तेरहवाँ चौदहवाँ और अठारहवाँ के आदि के दो (सोलहवाँ, सतरहवाँ) और अन्तिम (१९वाँ) अक्षर ये सब गुरु हों (अर्थात् बाकी अक्षर लघु हों) और १२, ७ अक्षरों पर विश्राम हो उसे काव्य को जानने वाले शार्दूलविक्रीडित छन्द कहते हैं ॥३५॥

अत्र विशेषः—

लक्षणं पिङ्गलसूत्रे—

"शार्दूलविक्रीडितं 'म्सौ ज्सौ तौग्' आदित्यऋपयः।"

अर्थ—जिसके प्रत्येक चरणमें क्रम से मगण, सगण, जगण, सगण, दो तगण और एक गुरु अक्षर हो तथा १२, ७ अक्षरों पर विश्राम हो उसे शार्दूल-विक्रीडित छन्द कहते हैं।

छन्दोमञ्जरीवृत्तरत्नाकरयोः—

"सूर्याश्वै-र्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्।"

अर्थ—उपरोक्त पिङ्गलसूत्रार्थ सदृश है।

उदाहरणम्—

म. स. ज. स. त. त. ग.

ऽ ऽ ऽ । । ऽ । ऽ । । । ऽ ऽ ऽ । ऽ ऽ । ऽ

"गोविन्दं प्रणमो–त्तमाङ्ग ! रसने ! तं घोष–या हर्नि–शं
पाणी ! पूजयतं मनः ! स्मर पदे ! तस्यालयं गच्छतम्।
एवञ्चेत् कुरुताखिलं मम हितं शीर्षादयस्तद्ध्रुवं
नो प्रेक्षे भवतां कृते भवमहाशार्दूल–विक्रीडितम्॥

अर्थ—हे मस्तक ! तुम गोविन्द को प्रणाम करो, हे जीभ ! तुम गोविन्द को रटो, हे हाथ ! तुम उनकी पूजा करो, हे मन ! तुम उनका स्मरण करो, हे पावँ तुम उनके मन्दिर में जाओ, हे मस्तकादिक मेरे अङ्ग ! इस प्रकार तुम यदि मेरे समस्त हित काम को करो तो तुम्हारे कारण इस संसार रूप महाव्याघ्र की लीला (दुःख शोकादि) को मैं नहीं देख सकता हूँ॥ ३५॥

अथैकविंशत्यक्षरवृत्ते स्रग्धराछन्दोलक्षणम्—

**चत्वारो यत्र वर्णाः प्रथममलघवः षष्ठकः सप्तमोऽपि**
**द्वौ तद्वत् षोडशाद्यौ मृगमदतिलके ! षोडशान्त्यौतथान्त्यौ**
**रम्भास्तम्भोरुकान्ते ! मुनिमुनिमुनिभिर्दृश्यते चेद्विरामो**
**बाले ! वन्द्यैःकवीन्द्रैः सुतनु ! निगदिता स्रग्धरा सा प्रसिद्धा**

अन्वयः—हे मृगमदतिलके ! यत्र प्रथमं चत्वारः, वर्णाः, अलघवः, तथा षष्ठः, सप्तमः, अपि द्वौ वर्णौ, तद्वत् षोडशाद्यौ षोडशान्त्यौ तथा अन्त्यौ द्वौ 'अपि अलघू' तथा हे रम्भास्तम्भोरूकान्ते ! यत्र मुनिमुनि-मुनिभिः चेत् विरामः, दृश्यते तदा हे बाले ! हे सुतनु ! वन्द्यैः कवीन्द्रैः, निगदिता सा 'स्रग्धरा' प्रसिद्धा॥ ३६॥

व्याख्या—हे मृगमदतिलके ! = कृत-कस्तूरीविलेपने ! यत्र = यस्मिन् वृत्ते प्रथमं = आदौ, चत्वारः = प्रथमद्वितीयतृतीयचतुर्थाः वर्णाः अलघवः = गुरवः स्युः, तथा षष्ठः, सप्तमः द्वौ वर्णौ, तद्वत् = तथैव षोडशाद्यौ = चतुर्दशपञ्चदशौ, एवं षोडशान्त्यौ = सप्तदशाष्टादशौ तथा अन्त्यौ = विंशैकविंशौ = विंशत्येकविंशतिसंख्यकौ वर्णौ अपि तद्वत् अलघू = गुरू स्याताम्, तथा हेरम्भास्तम्भोरुकान्ते ! = कदली-स्तम्भोरुरुचे ! यत्र मुनिमुनिमुनिभिः = संप्तसप्तसप्तभिः, वर्णैः चेत् = यदि विरामः = विरतिः दृश्यते = अवलोक्यते तदा हेबाले ! = नूतनवयस्के ! हे सुतनु ! = शोभनाङ्गि ! वन्द्यैः = पूज्यैः, कवीन्द्रैः = कविश्रेष्ठैः निगदिता = कथिता सा = उक्तलक्षणलक्षिता 'स्रग्धरा' इति प्रसिद्धा = ख्याता 'अस्ति' ॥ ३६ ॥

समासः—मृगमदस्य (कस्तूरीसमाख्यस्य) तिलकं यस्याः सा मृगमदतिलका तत्सम्बोधने हे मृगमदतिलके ! न लघव इति अलघवः । षोडशस्य आद्यौ षोडशाद्यौ । षोडशस्यान्त्यौ षोडशान्त्यौ । रम्भायाः (कदल्याः) स्तम्भवत्. उर्वोः (जङ्घयोः) कान्तिर्यस्याः सा रम्भास्तभोरुकान्तिस्तत्सम्बोधने हे रम्भास्तभ्भोरुकान्ते ! । मुनयश्च मुनयश्च मुनयश्चेति मुनिमुनिमुनयस्तैः मुनिमुनिमुनिभिः । कवीनामिन्द्राः कवीन्द्रास्तैः कवीन्द्रैः । सुष्ठु तनुर्यस्याः सा सुतनूस्तत्सम्बोधने हे सुतनु ! ॥ ३६ ॥

भावार्थः—जिस छन्द के प्रत्येक चरण में आदि का चार (पहिला दूसरा, तीसरा, चौथा) अक्षर, तथा छठा, सातवाँ, और सोलहवाँ के पूर्व दो (चौदवहाँ, पन्द्रहवाँ) और उसके अन्त्य के दो (सतरहव अठरहवाँ) तथा चरण के अन्त के दो (वीसवाँ, इक्कीसवाँ) ये सब अक्षर गुरु हो अर्थात् बाँकी अक्षर ह्रस्व हो तथा सात, सात, सात, अक्षरों पर विश्राम हो तो उसे कविश्रेष्ठजन शार्दूलविक्रीडित कहते हैं ॥३६॥

अत्र विशेषः—

लक्षणं पिङ्गलसूत्रे—

"स्रग्धरा 'म्रौ भ्नौ यौय् त्रिःसप्तकाः ।"

अर्थ—जिसके प्रत्येक चरणों मे मगण, रगण, भगण, नगण, वाद ३ यगण हो और सात, सात, अक्षरों पर विश्राम हो उसे स्रग्धरा छन्द कहते हैं ।

वृत्तरत्नाकरे—

"म्रौ भ्नौ यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ।"

अर्थ—उपरोक्त पिङ्गलसूत्र के अर्थ सदृश है ।

छन्दोमञ्जर्याम्—

"म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ।"

अर्थ—पिङ्गलसूत्र के अर्थ सदृश है ।

उदाहरणम्—

म. र. भ. न. य. य. य.

ऽ ऽ ऽ ऽ। ऽ ऽ।। ।।। । ऽ ऽ । ऽ ऽ । ऽ ऽ

व्याकोशे-न्दीवरा-भा कन-क कप-ल्लसत्पी-त वासाः सुहासा

वर्हैरुच्चन्द्रकान्तैर्वलयितचिकुरा चारुकर्णा-वतंसा ।

अंसव्यासक्तवंशीध्वनि-सुखितजगद्वल्लवीभिर्लसन्ती

मूर्तिर्गोपस्य विष्णोरवतु जगति वः स्रग्धरा हारिहारा ॥"

अर्थ—विकसित नील कमल सदृश कान्ति है जिसकी, सुवर्ण सदृश पीतवस्त्र है जिनका, सुन्दर हास्य से युक्त, और जिनके केश में मोरपक्ष कान में कुण्डल है और वंशी के शब्द से जगत को सुखित कर दिया जिसने तथा जो गोपियों के बीच में सुशोभित और सुन्दर हार और माला को धारन की हुई गोपाल श्रीकृष्ण जी की मन-मोहिनी मूर्ति है वह तुम्हारी रक्षा करै ॥३६॥

चौगमा-ग्राम-वास्तव्य-श्रीसीताराम-शर्मणा ।

श्रुतबोधे कृता टीका समाप्ताऽऽत्राशुऽऽबोधिनी ॥

इति मैथिल-कवि-ज्यौतिषाचार्य—पं० श्रीसीताराम-शर्म-कृतायां "आशुबोधिनी" संज्ञकायां श्रुतबोधटीकायां वृत्तप्रकरणम्

॥ शुभम् ॥



———

# संक्षिप्तच्छन्दोगणितम् ।

मङ्गलाचरणम्—

ध्यात्वा गणपतिं वक्ष्ये संक्षेपाच्च शिशोर्मुदे ।
सूचीं प्रस्तारकं नष्टमुद्दिष्टञ्च लगक्रियाम् ॥ १ ॥

व्याख्या = गणपतिं ध्यात्वा संक्षेपात् शिशोः = बालकस्य मुदे, छन्दसां सूचीं = एकादिवृत्तभेदसंख्यां सूचयतीति सूची ताम्, तथा प्रस्तारं = प्रस्तार्यन्ते गुरुलघुरूपतया वर्णा अनेनेति प्रस्तारस्तम्, तथा नष्टम् = 'अत्रेयत्संख्याको भेदः कीदृशः? एवंरूपस्य प्रश्नस्य गुरुलघुसंनिवेश विशेषसमर्थनरूपम्, तथोद्दिष्टम् = 'ईदृशसंनिवेशविशेषवान् छन्दश्चरणरूपः कियत्संख्याको भेदः? इति प्रश्नस्य समर्थनरूपमुत्तरम्, तथा लगक्रियाम् = एकादिलघुगुरुभेदसंख्याद्योतिकाम्, (अहं) वक्ष्ये = कथयिष्यामि ॥ १ ॥

भावार्थः—मैं गणेशजी का ध्यान करके बालकों की प्रसन्नता के लिये छन्दके भेदों को जानने के लिये सूची, प्रस्तार, नष्ट, उद्दिष्ट और एकादिलगक्रिया को कहता हूँ ॥ १ ॥

(१) सूची—उसे कहते हैं जिससे एकाद्यक्षरवाले छन्दों की भेद-संख्या समझी जाय।

(२) प्रस्तार—उसे कहते हैं जिससे किसी एक छन्द के जितने भेद होते हैं उन सब भेदों के रूप गुरु लघुसंनिवेश पूर्वक प्रस्तार (पसार) कर दिखलाये जायँ।

(३) नष्ट—उसे कहते हैं जिससे प्रस्तार को नष्ट करके पूछा जाय कि अमुकसंख्याक्षर चरण वाले छंदका अमुकसंख्यकभेद का रूप कैसा है? इस प्रकार प्रश्न का उत्तर दिखलाया जाय।

(४) उद्दिष्ट—उसे कहते हैं 'जब किसी छन्द के प्रस्तारसे उस छंद के चरणरूप किसी एक भेद को दिखला कर पूछा जाय कि यह प्रस्तार का कौन सा भेद है? इस प्रकार के प्रश्न में जिस से उसकी संख्या समझी जाय।

(५) लगक्रिया—उसे कहते हैं यदि पूछा जाय कि अमुकसंख्या-क्षर चरणवाले छन्द के भेदों में एकादिलघुवाले वा एकादि गुरु वाले पृथक् पृथक् कितने हैं? इस प्रकार प्रश्न का उत्तर जिससे दिखलाया जाय।

### समवर्णवृत्तसूची—

**आदौ द्वौ च लिखित्वाङ्कानग्रे द्विगुणितान् न्यसेत्।**
**एकादिवर्णवृत्तानां भेदसूची क्रमाद् भवेत् ॥२॥**

व्याख्या—आदौ प्रथमं द्वौ द्विसंख्याङ्कं (२) लिखित्वा, अग्रे क्रमात् द्विगुणितान् अङ्कान् न्यसेत्=लिखेत् सा क्रमादेकादिवर्ण-वृत्तानां भेदसूची=भेदसंख्या भवेत् ॥ २ ॥

भाषार्थः—आदि में २ अङ्क लिख कर क्रम से उसे द्विगुणित कर के लिखे वह क्रम से एकद्वयादिवर्णवृत्त की भेदसंख्या होती है, वही सूची कहलाती है ॥ २ ॥

### सममात्रावृत्तसूची—

**एकं द्वौ च ततोऽप्यग्रे पृष्ठद्व्यङ्कयुतिं न्यसेत्।**
**सा चैकादिकमात्राणां भेदसंख्याङ्कसूचिका ॥३॥**

व्याख्या—प्रथमं एकं (१) ततः द्वौ (२) लिखित्वा ततः अग्रे पृष्ठद्व्यङ्कयुतिं=पृष्ठस्थयोः द्वयोः, अङ्कयोर्युतिं 'क्रमात्' न्यसेत्=लिखेत् सा एकादिमात्राणां छन्दसां भेदसंख्याङ्कसूचिका स्यात् ॥३॥

भाषार्थः—पहिले १ तब २ फिर आगे पृष्ठस्थित [पूर्वलिखित] दो दो अङ्क के योग लिखे, इस क्रम से अभीष्ट संख्या तक लिखने से एकादिमात्रावृत्त की सूची होती है ॥ ३ ॥

### उदाहरणम्—

**एकादिवर्णमात्राणां नवान्तानां पृथक् पृथक्।**
**छन्दसां वद मे मित्र! भेदसंख्याङ्कसूचिकाम् ॥**

भाषार्थः—हे मित्र! एक अक्षर से नव अक्षर तक चरण वाले वर्णवृत्तकी, तथा एक मात्रा से ९ मात्रा तक चरण वाले छन्द की भेदसूची अलग अलग कहो।

उपरोक्तयुक्ति से वर्णवृत्तसूची—

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | वर्ण संख्या |
|---|---|---|---|---|---|---|---|---|---|
| २ | ४ | ८ | १६ | ३२ | ६४ | १२८ | २५६ | ५१२ | भेदसंख्या सूची |

इस वर्णवृत्तसूची से यह सिद्ध हुआ कि एक अक्षर चरणवाले छन्द दो (२) प्रकार के, दो अक्षर वाले ४ प्रकार के, ३ अक्षर वाले ८ प्रकार के, ४ अक्षर वाले १६ प्रकार के इत्यादि होते हैं।

तथा उपरोक्त युक्ति से मात्राछन्दःसूची—

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | मात्रा संख्या |
|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ५ | ८ | १३ | २१ | ३४ | ५५ | भेदसंख्या सूची |

इस मात्रा छन्दःसूची-से यह समझा जाता है कि १ मात्रा वाला छन्द १ प्रकार का, दो मात्रा वाला दो प्रकार का, तीन वाले तीन प्रकार के, चारमात्रावाले ५ प्रकार के, पाँच मात्रावाले ८ प्रकार के छन्द...इत्यादि होते हैं।

इस प्रकार अभीष्ट वर्ण तथा मात्रा तक की सूची बनाकर समझना चाहिये।

अथ प्रस्तारः—

गुरून् पादाक्षरैस्तुल्यान् संन्यस्याद्यगुरोरधः ।
लघुं विन्यस्य तस्याग्रे यथोपरि तथा लिखेत् ॥४॥
पश्चाद्दद्याद्‍ गुरूनेवं कार्यस्तावदयं विधिः ।
भवेत् सर्वलघुर्यावत् प्रस्तारोऽयमुदाहृतः ॥५॥

व्याख्या—पादाक्षरैस्तुल्यान् = पादाक्षरमितान् गुरून् = गुरुवर्णान् संन्यस्य, आद्यगुरोः अधः लघुं विन्यस्य तस्याग्रे यथोपरि =

उपरि यथा गुरुलघुरेखाः सन्ति, तथा लिखेत्, पश्चात् गुरून् = यथोपरितथा न लिखित्वा' सर्वान् गुरूनेव दद्यात्, एवं तावदयं विधिः कार्यः यावत् सर्वलघुः भवेत्, अयं प्रस्तारः उदाहृतः कथितः ॥४॥५॥

भाषार्थः—जितने अक्षर के चरण वाले छन्द का प्रस्तार बनाना हो उतने गुरु ( ऽ ) पहिली पंक्ति में लिखकर, पहिले गुरु अक्षर के नीचे लघु ( । ) लिखै फिर आगे जैसे ऊपर में गुरु लघु हो उसी तरह लिखना, पीछे ( बाँये तरफ ) यदि स्थान खाली रह जाय तो वहां गुरु ( ऽ ) ही लिख कर पूरा कर देना, इस प्रकार तब तक लिखते रहना जब तक सर्वलघु हो जाय, इस क्रिया को प्रस्तार कहते हैं ॥४॥५॥

अथोदाहरणम्—

वर्णत्रयपदस्यापि चतुर्वर्णपदस्य च ।
वृत्तस्य मित्र ! विन्यस्य प्रस्तारं दर्शय द्रुतम् ॥

भाषार्थः—हे मित्र ! तीन अक्षर के चरण वाले छन्द का तथा चार अक्षर चरण वाले छन्द का प्रस्तार लिख कर शीघ्र कहो ॥

त्र्यक्षरप्रस्तारः ।

| | | |
|---|---|---|
| १ | ऽ ऽ ऽ | सर्वगुरु, |
| २ | । ऽ ऽ | एकलघु, वा द्विगुरु |
| ३ | ऽ । ऽ | एकलघु, वा द्विगुरु |
| ४ | । । ऽ | द्विलघु, वा एकगुरु |
| ५ | ऽ ऽ । | एकलघु, वा द्विगुरु |
| ६ | । ऽ । | द्विलघु, वा एकगुरु |
| ७ | ऽ । । | द्विलघु, वा एकगुरु |
| ८ | । । । | सर्वलघु |

चतुरक्षरप्रस्तारः।

| | | |
|---|---|---|
| १ | ऽ ऽ ऽ ऽ | सर्वगुरु |
| २ | । ऽ ऽ ऽ | एकलघु, वा त्रिगुरु |
| ३ | ऽ । ऽ ऽ | एकलघु ,, त्रिगुरु |
| ४ | । । ऽ ऽ | द्विलघु ,, द्विगुरु |
| ५ | ऽ ऽ । ऽ | एकलघु ,, त्रिगुरु |
| ६ | । ऽ । ऽ | द्विलघु ,, द्विगुरु |
| ७ | ऽ । । ऽ | द्विलघु ,, द्विगुरु |
| ८ | । । । ऽ | त्रिलघु ,, एकगुरु |
| ९ | ऽ ऽ ऽ । | एकलघु ,, त्रिगुरु |
| १० | । ऽ ऽ । | द्विलघु ,, द्विगुरु |
| ११ | ऽ । ऽ । | द्विलघु ,, द्विगुरु |
| १२ | । । ऽ । | त्रिलघु ,, एक गुरु |
| १३ | ऽ ऽ । । | द्विलघु ,, द्विगुरु |
| १४ | । ऽ । । | त्रिलघु ,, एक गुरु |
| १५ | ऽ । । । | त्रिलघु ,, एक गुरु |
| १६ | । । । । | सर्वलघु |

प्रस्तारविधि—यदि तीन अक्षर का प्रस्तार बनाना है तो पहिले पंक्ति में तीनों गुरु ( ऽ ऽ ऽ ) लिखा, यह पहिला रूप हुआ, फिर उसके नीचे दूसरी लाइन में प्रथम गुरु के नीचे लघु ( । ) लिखा, उसके आगे जैसे ऊपर दो गुरु है वैसे ही उन दोनों के नोचे दो गुरु लिखने से दूशरी पंक्ति पूरी हो गई तो दूसरा रूप । ऽ ऽ ऐसा हुआ, ऊपर चक्र में देखो। फिर उसके नीचे द्वितीय पंक्तिस्थ प्रथम गुरु के नीचे लघु ( । ) लिख कर उसके आगे ऊपर एक गुरु है इसलिये उसके सामने एक गुरु ( ऽ ) लिख दिया, पीछे ( वांये तरफ ) एक स्थान खाली रहा वहाँ ऊपर के सदृश नहीं लिख कर गुरु ही ( ऽ ) लिखा तो तीसरा रूप ( ऽ । ऽ ) ऐसा हुआ, इसी प्रकार आगे भी क्रिया करने से आठवीं पंक्ति में सर्वलघु ( ।।। ) हो गया, इस-

लिए तीन अक्षर के प्रस्तार के आठ भेद हुए, अर्थात् तीन अक्षर के चरण वाले छन्द आठ प्रकार के होते हैं। इसी प्रकार ४ अक्षर के चरण वाले छन्द के सब भेद १६ प्रकार होते हैं, ऊपर प्रस्तार चक्र देखो। इसी प्रकार पञ्चाक्षर आदि का भी प्रस्तार बना कर समझना ॥

मात्राप्रस्तारः—

मात्राप्रस्तार एवं स्यात् तत्रैकैकं गुरुं न्यसेत् ।
मात्राद्वयद्वयस्थाने लघ्वैकं पृष्ठतो लिखेत् ॥ ६ ॥

व्याख्या—एवं मात्राप्रस्तारोऽपि स्यात्, तत्र मात्राद्वयद्वयस्थाने एकैकं गुरुं न्यसेत्। विषमसंख्यासु मात्रास्ववशिष्टैकमात्रास्थाने एकं लघुम्पृष्ठतः पश्चात् वामभागे इत्यर्थः, लिखेत् ॥ ६ ॥

भावार्थः—मात्राप्रस्तार भी वर्णप्रस्तार सदृश ही होता है, वहाँ दो दो मात्रा के स्थान में एक एक गुरु बनाकर न्यास करना चाहिये यदि विषम संख्याक मात्रा हों वहाँ अवशिष्ट एक मात्राके स्थान में एक लघु बाँये तरफ लिखना चाहिये ॥ ६ ॥

उदाहरणम्—

प्रस्तारं पञ्चमात्राणां षण्मात्राणां च मे वद ।
यदि त्वमसि वृत्तानां प्रस्तारप्रक्रियापटुः ॥

भावार्थः—यदि छन्द की प्रस्तारक्रिया में तुम कुशल हो तो ५ मात्रा के प्रस्तार, और छौ मात्रा के प्रस्तार मुझे कहो।

यहाँ उपरोक्त युक्ति से ५ मात्रा का रूप ।ऽऽ फिर 'गुरोरधः लघुं विन्यस्य' इस प्रकार से प्रथम गुरु के नीचे एक लघु का न्यास किया और आगे ऊपर गुरु के नीचे गुरु लिखने से दो मात्रा अवशिष्ट रही उस स्थान में एक गुरु (ऽ) बनाकर पीछे लिख दिया तो दूसरा रूप ऽ।ऽ ऐसा हुआ, फिर प्रथम गुरु के नीचे लघु, आगे ऊपर सदृश लिखने से चारही ४ मात्रा ।।ऽ ऐसा हुआ इसमें एक मात्रा कमी रही इस लिए एक लघु पीछे रखने से ।।।ऽ यह तीसरा रूप हुआ इसी प्रकार सर्व लघुतक बनाना, स्पष्टार्थ चक्र देखो।

पञ्चमात्राप्रस्तारः—

| | |
|---|---|
| । ऽ ऽ | १ |
| ऽ । ऽ | २ |
| । । । ऽ | ३ |
| । ऽ ऽ । | ४ |
| । । ऽ । | ५ |
| । ऽ । । | ६ |
| ऽ । । । | ७ |
| । । । । । | ८ |

षण्मात्राप्रस्तारः—

| | |
|---|---|
| ऽ ऽ ऽ | १ |
| । । ऽ ऽ | २ |
| । ऽ । ऽ | ३ |
| ऽ । । ऽ | ४ |
| । । । । ऽ | ५ |
| । ऽ ऽ । | ६ |
| ऽ । ऽ । | ७ |
| । । । ऽ । | ८ |
| ऽ ऽ । । | ९ |
| । । ऽ । । | १० |
| । ऽ । । । | ११ |
| ऽ । । । । | १२ |
| । । । । । । | १३ |

### अथ नष्टज्ञानप्रकारः—

**नष्टस्याङ्के समे प्राज्ञस्तस्याऽर्धेऽर्धे लघुं लिखेत् ।**
**संयोज्य विषमे चैकं तस्यार्धेऽर्धे गुरुं तथा ॥ ७ ॥**

व्याख्या—नष्टस्य अङ्के = संख्याङ्के समे = समसंख्यके सति तस्यार्धेऽर्धे प्राज्ञः = पण्डितः लघुं लिखेत्, कृतेऽर्धेऽपि समसंख्यके पुनः लघुमेव लिखेत्, तथा विषमे = असमसंख्यके सति तत्रैकं = एकसंख्यकाङ्कं संयोज्य तस्यार्धेऽर्धे गुरुं लिखेत्, अर्धितेऽपि विषम-संख्याङ्के एकं संयोज्य तदर्धे पुनर्गुरुमेव लिखेत्, एवं नष्टवृत्ताक्षरसंख्यापूरणं यावत् कुर्यात् ॥ ७ ॥

भाषार्थः— जब कोई प्रश्न करै कि अमुकसंख्याक्षर चरणवाले छन्द के प्रस्तार में अमुकसंख्यक भेद का रूप कैसा है ? वहाँ यदि वह संख्याङ्क सम हो तो उसका आधा कर लघु (।) का न्यास करै, आधे करने पर भी समाङ्क ही रहे तो फिर आधेकर लघुही (।) लिखे यदि विषम अङ्क हो तो उसमें एक जोड़कर आधा करके गुरु लिखे, फिर भी यदि आधा करने पर विषम ही हो तो एक जोड़कर आधा-करके गुरु ही लिखे। जहाँ आधा करने से सम हो वहाँ लघु, जहाँ विषम हो वहाँ एक जोड़कर आधे में गुरु इस प्रकार जब तक प्रश्न-नष्टवृत्ताक्षर संख्या पूरी हो तब तक करै ॥ ७ ॥

उदाहरणम्—

त्र्यक्षरे वद मे षष्ठं भेदं प्रस्तारसम्भवम् ।
पञ्चाक्षरेऽष्टमं तद्वद् दशमं चतुरक्षरे ॥

भापार्थः—तीन ( ३ ) अक्षर के प्रस्तार में छठा भेद, तथा पाँच अक्षर के प्रस्तार में आठवाँ और चार अक्षर के प्रस्तार में दशवाँ भेद कैसा होगा सो मुझे कहो ? ॥

यहाँ त्र्यक्षर प्रस्तार के ६ ठा भेद पूछता है इस लिये नष्टांक ६ यह सम है इसको आधा करके एक लघु ( । ) लिखा, और आधा अंक ३ विषम हो गया इसलिये इसमें १ जोड़कर आधा किया और एक गुरु ( ऽ ) पूर्वलिखित लघु के आगे लिखा तो ऐसा ।ऽ हुआ, फिर दूसरे दफे आधा करने पर दो सम अंक हुआ इसलिये इसको आधा करके आगे एक लघु लिखा तो ऐसा ( ।ऽ। ) हुआ यहाँ त्र्यक्षर सम्बन्धी प्रश्न था तीनों स्थान पूरा हो गया, इसलिये तीन अक्षर के प्रस्तार में छठा भेद ।ऽ। ऐसा हुआ । त्र्यक्षर प्रस्तारचक्र देखो ।

दूसरे प्रश्न में पञ्चाक्षर प्रस्तार के आठवाँ भेद का रूप अपेक्षित है यहाँ नष्टांक ( ८ ) सम है इसलिए इसको आधा करके ( । ) लघु लिखा, आधा करने पर ४ यह भी समाङ्क ही है इसलिए फिर इसको आधा करके लघु ( । ) पूर्व लिखित के आगे लिखा, ४ के आधा भी समाङ्क ही हुआ इसलिए फिर इसको आधा कर आगे एक लघु लिखा तो ( ।।। ) ऐसा हुआ, अब दो के आधा करने पर १ विषमाङ्क बचा इसलिये इसमें १ जोड़ कर आधा करके आगे ( ऽ ) गुरु लिखा, फिर भी आधा करने पर १ रहा इसलिये फिर एक जोड़ कर आधा करके गुरु ही ( ऽ ) लिखा तो पाँचो स्थान पूर्ति हो गयी ( ।।।ऽऽ ) यही पञ्चाक्षर प्रस्तार का आठवाँ भेद हुआ ।

तीसरा प्रश्न—चतुरक्षर प्रस्तार में दशवाँ ( १० ) भेद का है १० समाङ्क है, अतः आधा करके लघु लिखा ( । ) लिखा, आधा करने पर ५ विषम हुआ, इसलिये १ जोड़कर आधा करके ( ऽ ) गुरु लिखा फिर आधा करने पर ३ विषमाङ्क है, अतः १ जोड़कर आधा करके ( ऽ ) गुरु लिखा, यहाँ आधा करने पर समाङ्क २ बचा अतः आधा करके ( । ) लघु लिखा चतुरक्षर प्रस्तार का प्रश्न है अतः

चारो स्थान पूर्ति हो गयी (।ऽऽ।) यही चतुरक्षर प्रस्तार का दशवाँ रूप है । ऊपर चक्र देखो ॥

अथ मात्रानष्टम्—

प्रतिमात्रं लिखेदङ्कान् नष्टे सूचीसमुद्भवान् ।
पृष्टाङ्कश्चान्त्यतः शोध्यः शेषादन्यान् विशोधयेत् ॥८॥
शुद्ध्यति व्युत्क्रमाद् यो यस्तदधो गुरुता भवेत् ।
परया कलया सार्द्धं रूपं नष्टस्य तद् भवेत् ॥९॥

व्याख्या—नष्टे = मात्रानष्टे, प्रतिमात्रं = मात्रासु (यावत्संख्यको भेदो यावन्मितासु मात्रास्वभीष्टस्तासु लघुरूपेण पृथक् स्थापितासु) सर्वासु, सूचीसमुद्भवान् = पूर्वोक्तमात्रासूचीस्थाग्तान् (एकद्वित्रिपञ्चाष्टादीन्) अङ्कान् लिखेत् = उपरि स्थापयेत्, च = पुनः अन्त्यतः = अन्त्याङ्कात् पृष्टाङ्कः प्रष्टुरभीष्टाङ्कः शोध्यः = पात्यः, शेषात् (शिष्टाङ्कश्चेत् तस्मात्) शेषाङ्कात् अन्यान् अङ्कान् व्युत्क्रमात् शोधयेत् (शेषाद्यो ऽङ्को न शुद्ध्येत् तदग्रिमाङ्कं शोधयेत् सोऽपि न शुद्ध्येत् चेत् तदा तदग्रिमं शोधयेत्, एवं शून्यशेषं यावत् शोधयेत्) एवं यो योऽङ्कः शुद्ध्यति तदधः = तस्याङ्कस्याधस्तात् परया = अग्रिमया कलया = मात्रया सार्धं गुरुता भवेत्, तत् नष्टस्य रूपं वदेत् = ब्रूयात् ॥ ८ ॥ ९ ॥

भावार्थः—जितनी मात्रा में नष्ट के प्रश्नाङ्क हो उन मात्राओं को लघु रेखा रूप में अलग अलग लिख कर क्रम से उन सबके ऊपर मात्रा सूची के अंक (१, २, ५, ८, इत्यादि) लिखे, अन्तिम अङ्कमें प्रश्नाङ्क को घटावे, शेष अङ्क में उत्क्रम विधि से आगे के अङ्क को घटावे फिर शेष बचे तो उसमें फिर आगे के जो अङ्क घटे उसे घटावे, इस प्रकार जब तक शून्य शेष हो जाय तब तक क्रिया करै, इस प्रकार जो जो अङ्क शेषाङ्क में घटै उनके नीचे आगे की मात्रा मिलाकर गुरू (ऽ) कर देना तो नष्ट का रूप हो जायगा ॥८॥९॥

उदाहरणम्—

प्रस्तारे पञ्चमात्राणां षष्ठो भेदश्च कीदृशः ।
गणिते पटुता ते चेत् क्षिप्रं ब्रूहि विचक्षण ! ॥

अर्थः—हे विचक्षण! यदि तुम्हें गणित में पटुता है तो पाँच मात्रा के प्रस्तार में ६ छठा भेद का रूप कैसा होगा कहो?

यहाँ ५ मात्रा के छठा भेद का प्रश्न है इसलिए प्रश्नाङ्क ६ हुआ उक्त रीति से लघु रूप से पाँचो मात्रा को अलग अलग लिख कर उन पर क्रम से मात्रासूची के अङ्क का न्यास किया यथा—

१ २ ३ ५ ८
| | | | | यहाँ अन्तिम अंक (८) में प्रश्नाङ्क (६)को घटाया तो शेष बचा २ इसमें उत्क्रम से सुची अंक ५,३,२, आदि के ५, या ३ नहीं घट सकता है इसलिए २ को घटाया तो शेष शून्य ० हो गया इसलिये दो के नीचे ३ के नीचे का लघु मिला कर गुरु (ऽ) लिख

१ २ ५ ८
दिया तो ऐसा रूप हुआ | ऽ | | यही पाँच मात्रा के प्रस्तार का
३
छठा भेद हुआ इसी प्रकार सर्वत्र मात्रा नष्ट का ज्ञान करना॥

## अथ वर्णसमवृत्तोद्दिष्टम्—

**आदावेकं ततो द्विघ्नानुदिष्टेऽङ्कान् क्रमाल्लिखेत्।**
**लघुस्थाङ्कयुतिः सैका स्यात् संख्योद्दिष्टसम्भवा॥१०॥**

व्याख्या—उद्दिष्टे =(प्रष्टुरभीष्टवृत्तपदरूपे,) निर्दिष्टे आदौ = प्रथमाक्षरे एकं = एकसंख्याङ्कं लिखित्वा ततः = तदनन्तरं क्रमात् = वर्णसूचीक्रमात् द्विघ्नान् = द्विगुणितान् अङ्कान् लिखेत्, 'तत्र' लघुस्थानां अङ्कानां युतिः (योगः) सैका = एकेन (१) सहिता उद्दिष्टसम्भवा संख्या स्यात्॥१०॥

भावार्थः—(यदि किसी छन्द के प्रस्तार से किसी एक भेद को लिख कर पूछा जाय कि यह उक्त छन्द के कौन सा (कितने संख्यक भेद है?)—वहाँ उसकी संख्या समझने के लिये उद्दिष्ट के प्रथम अक्षर पर एक लिख कर आगे क्रम से वर्ण सूची के सदृश द्विगुणित अङ्क (२, ४, ८, आदि) लिख कर लघु अक्षरों पर जितने अङ्क हों उनका योग कर उसमें एक (१) और जोड़ देने से उद्दिष्ट की संख्या होती है॥१०॥

उदाहरणम्—

चतुरक्षरपादोत्थः केवलान्त्यगुरुस्तथा।
नगस्वरूपिणी छन्दः कोभेदः स्यादनुष्टुभः॥

अर्थ—चार अक्षर के चरण वाले छन्द के प्रस्तार में केवल जिसके अन्त में गुरु ( अर्थात् ।।।ऽ ऐसा ) है वह कौन सा (कितने संख्यक भेद है। तथा नगस्वरूपिणी छन्द अनुष्टुप् ( अष्टाक्षर चरण वाले छन्द ) का कौन सा भेद है ?।

यहाँ पहिला प्रश्न में अन्त्यगुरु चतुरक्षर उद्दिष्ट है, उसके प्रथम वर्ण पर १ लिख कर वर्णसूची क्रम से द्वितीय पर, २ तृतीय पर ४,

१ २ ४ ८

चतुर्थ पर ८ लिखा तो ऐसा हुआ। । । ऽ यहाँ ३ लघु हैं उनके उपर वाले अङ्कों का योग ( १+२+४ )=७ सात हुआ इस लिये यह ।।।ऽ चतुरक्षर प्रस्तार का सातवाँ भेद है। पीछे प्रस्तार—चक्र देखो।

दूसरा प्रश्न में नगस्वरूपिणी छन्द की भेदसंख्या अपेक्षित है, इसलिये नगस्वरूपिणी छन्द के एक चरण को लिखकर प्रत्येक अक्षर पर वर्णसूची-क्रम से एकादिद्विगुणित अङ्कों का न्यास किया यथा—

१ २ ४ ८ १६ ३२ ६४ १२८
। ऽ । ऽ । ऽ । ऽ
"द्वितुर्यष–ष्ठ–म–ष्ट–मम्।"

यहां भी लघु अक्षर के ऊपर वाले अङ्कों का योग=( १+४+१६+६४ )=८५ हुआ इसलिये नगस्वरूपिणी छन्द अनुष्टुप् का ८५ वां भेद है। प्रस्तार बनाकर देख लो। इसी प्रकार हर एक छन्द की भेदसंख्या समझना॥

अथ मात्रोद्दिष्टम्—

प्रतिमात्रं लिखेदङ्कान् क्रमात् सूचीसमुद्भवान्।
गुरोरूर्ध्वमधश्चापि द्विमात्रिकतया न्यसेत्॥११॥
गुरुमूर्द्धगताङ्कानां संयोगं चान्तिमाङ्कतः।
संशोध्य शेषसंख्या या सा मात्रोद्दिष्टसंभवा॥१२॥

व्याख्या—'मात्रोद्दिष्टे' प्रतिमात्रं = सर्वासु मात्रासु क्रमात् = सूचीसमुद्भवान् मात्रासूचीक्रमात् अङ्कान् लिखेत्, गुरोः द्विमात्रिक-कतया = मात्राद्वितयत्वेन ऊर्ध्वं उपरि, अधस्तलेऽपि न्यसेत् = अङ्क-न्यासं कुर्यात्, एवं कृते गुरुमूर्द्धगताङ्कानां संयोगं अन्तिमाङ्कतः = उद्दिष्टलिखितान्त्याङ्कात् संशोध्य या शेषसंख्या सा उद्दिष्टसम्भवा = मात्रोद्दिष्टसम्बधिनी संख्या स्यात् ॥११॥१२॥

भाषार्थः—मात्रा के उदिष्ट में प्रत्येक मात्रा पर मात्रा-सूची के क्रम से अङ्कन्यास करै, गुरुवर्ण के द्विमात्रिक होने के कारण उसके ऊपर और नीचे भी अङ्कन्यास करना चाहिये इस प्रकार अन्त्य मात्रा तक न्यास करके गुरुवर्ण के ऊपरवाले अङ्कों के योग अन्तिम मात्राङ्क में घटाने से शेष मात्रोद्दिष्ट की संख्या समझना ॥११,१२॥

उदाहरणम्

पञ्चमात्रोद्भवस्याशु केवलाद्यगुरोर्वद ।
संख्यां प्रस्तारजां मित्र! यदि ते गणिते गतिः ॥

अर्थ—हे मित्र ! यदि गणित में तुम्हारी गति है तो केवल आदि गुरु पाँच मात्रा की प्रस्तारसंख्या कहो ।

यहाँ आदि गुरु पाँच मात्रा के प्रस्तार पर उक्तरीति से अङ्कों का न्यास किया तो

१ ३ ५ ८
ऽ । । ।
२

ऐसा हुआ, यहाँ गुरुवर्ण के ऊपर में केवल १ है इसको अन्तिम अङ्क ८ में घटाया तो शेष ७ बचा इसलिये ऽ । । । यह पाँच मात्रा के प्रस्तार का सातवाँ भेद सिद्ध हुआ पीछे प्रस्तार देखो । इसी प्रकार मात्रा उद्दिष्ट की संख्या समझना ॥

अथैकादिलगक्रिया—

इष्टाद्वरसमान् कोष्ठानूर्ध्वाधः क्रमतो लिखेत् ।
एकैकापचितानग्रे लिखित्वाऽङ्कैः प्रपूरयेत् ॥१३॥

एकाद्येकोत्तरैः पूर्वपंक्तिकोष्ठान् तदग्रतः।
पूर्वपंक्तिस्थितैकद्वित्र्यादिकोष्ठाङ्कसंयुतिम् ॥१४॥
द्वितीयादिकपङ्क्तिस्थकोष्ठेष्वेवं लिखेत् क्रमात्।
ज्ञेया तिर्यक्क्रमेणैवमेकद्व्यादिलगक्रिया ॥१५॥

व्याख्या—इष्टाक्षरसमान् = यावदक्षरमितपदस्यैकादिलगक्रिया ज्ञातुमभीष्टा तदक्षरतुल्यान्, कोष्टान् ऊर्ध्वाधः क्रमतः लिखेत् सा प्रथमा पंक्तिः, अग्रे एकैकापचितान्, पूर्वपङ्क्त्यग्रे पूर्वलिखितकोष्ठ संख्यातः एकापचितान् द्वितीयपंक्तौ, तदपेक्षया एकापचितान् तृतीयपंक्तौ, इत्येवमग्रे कोष्ठक्षयान्तं यावत् लिखेत्, ततः पूर्वपंक्तिस्थ-कोष्ठान् ऊर्ध्वाधः क्रमेणैव एकाद्येकोत्तरैः = एकद्वित्रिचतुष्पञ्चेत्या-दिभिः अङ्कैः प्रपूरयेत्, तदग्रतः द्वितीयादिपंक्तिस्थकोष्ठेषु पूर्वपंक्तिस्थि-तैकद्वित्र्यादिकोष्ठाङ्कसंयुतिं क्रमात् = ऊर्ध्वाधःक्रमादेव लिखेत् 'अर्थात् द्वितीयपंक्तिस्थकोष्ठेषु—प्रथमे कोष्ठे पूर्वलिखितपूर्वपंक्त्यूर्ध्व-कोष्ठाङ्कं, द्वितीयेकोष्ठे पूर्वपंक्तिस्थप्रथमद्वितीयकोष्ठाङ्कयोगं, तृतीये पूर्वपंक्तिस्थप्रथमादिकोष्ठाङ्कत्रययोगम्, चतुर्थे पूर्वकोष्ठचतुष्टयाङ्क-योगमेवं क्रमेण तृतीयादिपंक्तिष्वपि स्वस्वपूर्वकोष्ठाङ्कैरेव कोष्ठान् पूरयेत्। ततस्तिर्यक् क्रमेण एकादिलगक्रिया ज्ञेया ॥१३—१५॥

भावार्थः—जितने अक्षर तक पद वाले छन्द की एकादि लग-क्रिया जानने की इच्छा हो ऊर्ध्वाधर क्रम से उतने कोष्ठक एक पंक्ति में लिखे, आगे ऊर्ध्व क्रम से ही एक एक न्यून कोष्ठक के पंक्ति लिखे इस प्रकार अन्तिम पंक्ति में एक ही कोष्ठक होगा, इस प्रकार अभीष्ट अक्षर के बराबर ही कोष्ठ की पंक्ति बनेगी, पूर्व पंक्ति के कोष्ठों में एकादि एकोत्तर (अर्थात् १, २, ३, ४, ५ इत्यादि) अङ्क लिखे, अग्रस्थित कोष्ठके ऊपर वाले प्रथम कोष्ठ में पूर्व पंक्तिस्थ प्रथमकोष्ठाङ्क, दूसरे में पूर्व लिखित दो कोष्ठाङ्कों के योग, तीसरे में तीन पूर्वकोष्ठाङ्को के योग, चौथे में चार के योग, एवं क्रम से सब कोष्ठों को पूरा करे। तृतीय पंक्ति के कोष्ठों में भी द्वितीय कोष्ठों के एकद्व्यादिअङ्कों के योग लिखे, इस क्रम से सब कोष्ठों को पूरा कर तिर्यक् (सीधा) क्रम से एकादि लगक्रिया (एकादिलघुगुरुसंख्या) समझै ॥१३—१५॥

उदाहरणम्—

**एकादिगुरुभेदाः स्युः प्रस्तारेऽनुष्टुभः कति ।**
**एकादिलघुभेदा वा कतीति पृथगुच्यताम् ॥**

अर्थ—अनुष्टुप् ( अष्टाक्षर ) छन्द के प्रस्तार में एकादिगुरु के वा एकादि लघु के कितने कितने भेद होते हैं वे सब पृथक् पृथक् कहो ॥

यहाँ अष्टाक्षर प्रस्तार के एकादि गुरु वाले भेद की संख्या अपेक्षित है इसलिये उपरोक्त युक्ति से आठ कोष्ठक की पहिली पंक्ति, सात कोष्ठ की दूसरी, ६ कोष्ठ की तीसरी इत्यादि आठवीं पंक्ति तक लिखकर, पहिली पंक्ति के कोष्ठो में ऊपर नीचे के क्रम से १, २, ३, ४, ५, ६, ७, ८, अंक लिखा दूसरी पंक्ति के पहिले कोष्ठ में पूर्व कोष्ट के प्रथम अंक १ लिखा दूसरे में पूर्व कोष्ठ के दो अंकों (१,२) के योग ३ लिखा, तीसरे में पूर्व के तीन अंको (१,२,३,) के योग ६ लिखा, इत्यादि क्रम से दूसरी पक्ति के कोष्ठों को पूरा किया। तीसरी पक्ति के पहिले कोष्ठ में द्वितीय पंक्ति के प्रथम कोष्ठाङ्क (१), दूसरे में द्वितीय के दो अङ्कों (१, ३) का योग ४। एवं तृतीय में तीन अङ्कों का योग, चतुर्थ में चार अङ्कों का योग इत्यादि क्रम से लिखकर

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| एकाक्षरे | १ | | | | | | | |
| द्व्यक्षरे | २ | १ | | | | | | |
| त्र्यक्षरे | ३ | ३ | १ | | | | | |
| चतुरक्षरे | ४ | ६ | ४ | १ | | | | |
| पञ्चाक्षरे | ५ | १० | १० | ५ | १ | | | |
| षडक्षरे | ६ | १५ | २० | १५ | ६ | १ | | |
| सप्ताक्षरे | ७ | २१ | ३५ | ३५ | २१ | ७ | १ | |
| अष्टाक्षरे | ८ | २८ | ५६ | ७० | ५६ | २८ | ८ | १ |
| | एकगुरु वा एकलघु | द्विगुरु वा द्विलघु | त्रिगुरु वा त्रिलघु | चतुर्गुरु वा चतुर्लघु | पञ्चगुरु वा पञ्चलघु | षड्गुरु वा षड्गुरु | सप्तगुरु वा सप्तलघु | अष्टगुरु वा अष्टलघु |

सब कोष्ठोंको पूरा किया यथा—यहाँ कोष्ठक चक्र में देखो। यहाँ अष्टाक्षर का प्रश्न है इसलिये नीचे की आठवी पाक्त में क्रम से आठ अक्षर के एकादि गुरु वा लघु के भेद हैं। अर्थात् आठ अक्षर चरण वाले जितने छन्द हैं उनमें एक गुरु वाले ८, द्विगुरु वाले २८ त्रिगुरु वाले ५६, चतुर्गुरु वाले ७० पञ्चगुरु वाले ५६, षड्गुरु वाले २८

सप्तगुरु वाले ८, और अष्टगुरु या सर्वगुरु १, इस प्रकार छन्द होते हैं एही एकादि लघु की भी संख्या होती है। इस कोष्ठ को खण्डमेरु कहते हैं। इसको दूसरे प्रकार से विन्यास करने से मेरु के सदृश होने से मेरु कहते हैं। इससे एकाक्षर से लेकर अभीष्टाक्षर तक की पृथक् पृथक् एकादि लगक्रिया समझा जाती है।

विना कोष्ठक बनाये ही इष्टाक्षर की लगक्रिया जानने का प्रकार आगे कहते हैं।

अथ प्रकारान्तरेण लगक्रिया—

इष्टाङ्काद्यावदेकाङ्कमेकैकापचितान् लिखेत् ।
पूर्वाङ्कः प्रथमो भेदस्तेन गुण्यस्तदग्रिमः ॥१६॥
द्विभक्तश्च द्वितीयः स्यादेवं पूर्वगुणः परः ।
एकोत्तरविभक्तश्च स्यादेकादिलगक्रिया ॥१७॥

व्याख्या—इष्टाङ्कात् = इष्टाङ्कमारभ्य, 'क्रमेण' एकैकापचितान् = एकैकन्यूनसंख्यकान् अङ्कान् एकाङ्कं यावत् लिखेत्, एवं पूर्वाङ्कः = अभीष्टसंख्यासमः प्रथमो भेदः स्यात् । तेन = प्रथमभेदेन तदग्रिमोङ्को गुण्यः, द्विभक्तः = द्वाभ्यांभक्तः लब्धिर्द्वितीयो भेदः । तेन तदग्रिमाङ्को गुण्यस्त्रिभक्तस्तृतीयो भेदः । एवं पूर्वगुणः परः = पूर्वपूर्वभेदेन परः परः अङ्को गुणितस्तथैकोत्तरेण भक्तः, अग्रिमोऽग्रिमो भेदो भवति । इति एकादिलगक्रिया स्यात् ॥१६॥१७॥

भावार्थः—जितने अक्षर चरण वाले छन्द की लगक्रिया अपेक्षित हो उस अंक से आरम्भ कर क्रम से एक एक न्यून संख्या करके एक १ अङ्क तक लिखे उसमें पहिला अङ्क पहिला भेद है। उस (प्रथम भेद) से अगले अङ्क को गुणाकर २ से भाग देकर दूसरा भेद होता है। दूसरे भेदाङ्क से उसके अगले अङ्कको गुणाकर ३ का भाग देने से तीसरा भेद होता है। इस प्रकार पूर्व भेद से अगले अङ्क को गुणाकर एकोत्तर क्रम से भाग देने से सब भेद होते हैं। वही क्रम से एकादि लघु वा एकादि गरु वाले भेद को संख्या होती है ॥१६॥१७॥

उदाहरणम्—

यथा पूर्व प्रश्न में अनुष्टुप् ( अष्टाक्षर चरण वाले ) छन्द की एकादि लगक्रिया अपेक्षित है, इसलिये आठ से एक तक क्रम से एकापचित अङ्कों का न्यास किया यथा—८।७।६।५।४।३।२।१ यहाँ पहला अंक ८ यह प्रथम भेद हुआ। इससे अग्रिमांक ७ को गुणा-कर २ का भाग देने से लब्धि २८ यह दूसरा भेद हुआ। फिर इस ( २८ ) से अग्रिमाङ्क ६ को गुणा कर ३ का भाग देने से लब्धि ५६ यह तीसरा भेद हुआ इत्यादि आगे के भेद बनाने से सब भेद क्रम से ८।२८।५६।७०।५६।२८।८।१ पूर्व के समान ही हुए। पूर्व लिखित चक्र देखो।

अथ मात्रालगक्रियाज्ञानार्थं खण्डमेरुः—

पूर्वमेकं लिखेत् कोष्ठं तदधः पङ्क्तियुग्मके।
द्वौ द्वौ च तदधस्त्रींस्त्रीनेवमग्रे विवर्धयेत् ॥१८॥
ऊर्ध्वाधः पूर्वकोष्ठेषु सर्वेष्वेकं लिखेत् ततः।
तदग्रकोष्ठकेष्वेव ह्येकाद्येकोत्तरान्न्यसेत् ॥१९॥
अङ्कान् तदग्रकोष्ठेषु विन्यसेद् वर्णमेरुवत्।
स्वस्वपूर्वस्थितैकद्वि-त्र्यादियोगमिति क्रमात् ॥२०॥
एवं लगक्रिया खण्ड-मात्रामेरौ प्रजायते।
इति संक्षेपतः प्रोक्तं छन्दसां गणितं मया ॥२१॥

व्याख्या—पूर्वं = आदौ, एकं कोष्ठं लिखेत्, तदधः = तस्य कोष्ठस्याधः पङ्क्तियुग्मके = पङ्क्तिद्वयात्मके द्वौ द्वौ कोष्ठौ, च = पुनः तदधः पङ्क्तियुग्मके त्रीन् त्रीन् कोष्ठान् लिखेत्, एवं = अनेन क्रमेण अग्रे वर्धयेत्, ततः = कोष्ठरचनानन्तरं ऊर्ध्वाधः पूर्वकोष्ठेषु = ऊर्ध्वाधरक्रमस्थितेषु, आद्यकोष्ठेषु सर्वेषु एकं = एकाङ्कं लिखेत्, एवं = ऊर्ध्वाधःस्थितेषु तदग्रकोष्ठेषु 'ऊर्ध्वाधरक्रमेणैव' एकाद्येकोत्तरान् अङ्कान् न्यसेत्, तदग्रकोष्ठेषु स्वस्वपूर्वास्थतैकद्वित्र्यादियोगं वर्णमेरुवत् न्यसेत्, यथा वर्णखण्डमेरौ पूर्वमङ्कन्यासः कृतस्तथैवात्रापि

अङ्कन्यासं कुर्यात्, अर्थादग्रिमकोष्ठेषूर्ध्वं कोष्ठे स्वपूर्वकोष्ठोर्ध्वाङ्कं = एकं, द्वितीये स्वपूर्वलिखितकोष्ठद्वयाङ्कयोगं, तृतीये स्वपूर्वकोष्ठत्रयाङ्कयोग-मित्यादीन् अङ्कान् विन्यसेत्। इत्येवं खण्डमात्रामेरौ क्रमात् लगक्रिया प्रजायते। इति संक्षेपतः छन्दसां गणितं मया प्रोक्तम् ॥१८–२१॥

भाषार्थः—पहिले एक कोष्ठक लिखकर उसके नीचे दो पंक्ति में दो दो कोष्ठक, उसके नीचे फिर दो पंक्ति में तीन तीन कोष्ठक, उसके नीचे दो पक्ति में चार चार इस क्रम से अभीष्ट पर्यन्त नीचे तक लिखे। यहाँ ऊपर लिखित एक कोष्ठ के सामने नीचे के एक कोष्ठ रखकर क्रम से एक एक आगे बढ़ा कर लिखे इस प्रकार खण्डमात्रा मेरुकी आकृति बन जायगी।

उसमें उर्ध्वाधर (ऊपर नीचे) क्रम से स्थित प्रथम कोष्ठकों में हर एक में एक १ अङ्क लिखना, आगे के कोष्ठकों में उर्ध्वाधर क्रम से एकादि एकोत्तर (१, २, ३, ४, ५ इत्यादि) अङ्कों का न्यास करना, उसके आगे के कोष्ठों में पूर्वलिखित कोष्ठों के अङ्क वर्णखण्डमेरु में जैसे एकद्व्यादि अङ्कों के योग लिखा है उसी प्रकार क्रम से सब अङ्कों का न्यास करना, अर्थात् तीसरे ऊध्वाधर कोष्ठों के पहिले में स्वपूर्व द्वितीय कोष्ठकों के प्रथम कोष्ठाङ्क (१), द्वितीय में ऊपर से दो कोष्ठाङ्कों का योग ३, तृतीय में पूर्वकोष्ठ के तीन कोष्ठाङ्कों का योग, चतुर्थ में चार कोष्ठाङ्कों का योग इत्यादि क्रम से लिखे। इस प्रकार अङ्कन्यास करने पर पूर्ववत् क्रम से मात्रालगक्रिया समझना। इस प्रकार संक्षेप से मैंने छन्दों का गणित कहा है ॥१८–२१॥

अत्रोदाहरणम्

एकादि-दशमात्रोत्थच्छन्दसां मे पृथक् पृथक्।
खण्डमेरुं प्रविन्यस्य वद मित्र! लगक्रियाम् ॥

अर्थ—हे मित्र! एक आदि करके दशमात्रा तक के छन्दों की लगक्रिया खण्डमेरु विन्यास करके मुझे बताओ ॥

उक्त रीति से कोष्ठों में अङ्क न्यास करने से—

| | सर्वलघुसंख्या | एकगुरु | द्विगुरु | त्रिगुरु | चतुर्गुरु | पञ्चगुरु |
|---|---|---|---|---|---|---|
| एकमात्रयाः— | १ | | | | | |
| मात्राद्वयस्य— | १ | १ | | | | |
| मात्रात्रयस्य— | १ | २ | | | | |
| मात्राचतुष्टयस्य— | १ | ३ | १ | | | |
| मात्रापञ्चकस्य— | १ | ४ | ३ | | | |
| मात्राषट्कस्य— | १ | ५ | ६ | १ | | |
| मात्रासप्तकस्य— | १ | ६ | १० | ४ | | |
| मात्राष्टकस्य— | १ | ७ | १५ | १० | १ | |
| मात्रानवकस्य— | १ | ८ | २१ | २० | ५ | |
| मात्रादशकस्य— | १ | ९ | २८ | ३५ | १५ | १ |

इति मिथिला-देशान्तर्गत-चौगमा-निवासि-ज्यौ० आ० श्रीसीतारामशर्म-कृतसंक्षिप्तच्छन्दोगणितम् । शुभम् ॥



---

समाप्तम्

# अथ श्रुतबोधे—

## छन्दोव्युत्पत्तिप्रतिपादनायाभ्यासार्थं प्रश्नाः—

(१) गुरुवर्णपरिभाषापद्यं व्याख्यायताम् ।

(२) पादान्तस्थस्य ह्रस्वस्य विकल्पेन गुरुत्वं भवतीत्युदाहरणं प्रदर्श्यताम् । तथा पादान्तस्थ दीर्घस्यापि लघुत्वं भवति न वेति लिख्यताम् ।

(३) कियन्तो वर्णगणाः ? मात्रागणाश्च कियन्तः ? इति सप्रमाणं विलिख्यताम् ।

(४) आदिलघोर्गणस्य किं नाम, तथान्तगुरोश्च का संज्ञेति विलिख्यताम् । तथा तद्बोधकं पद्यं व्याख्यायताम् ।

(५) आर्याछन्दोलक्षणं व्याख्यायताम् । तस्यां सर्वमात्रासंख्या च कियतीति विलिख्यताम् ।

(६) आर्यायां सर्वाल्पवर्णसंख्या कियती तथा सर्वाधिकवर्णसंख्या कियती भवितुमर्हतीति विलिख्यताम् ।

(७) यत्र समपदेऽष्टादश, विषमपदे द्वादश मात्रा भवन्ति तत् किं नाम पद्यमितिनिगद्यताम् ।

(८) उपगीतिच्छन्दो लक्षणं किमिति लिख्यताम् ।

(९) "यस्योदयास्तसमये सुरमुकुटनिघृष्टचरणकमलोऽपि । कुरुतेऽञ्जलिं त्रिनेत्रः स जयति धाम्नां निधिः सूर्यः ॥" किं नामेदं छन्द इति सप्रमाणं लिख । तथास्मिन् पद्ये लघुवर्णाः कियन्तः, कियन्ति च गुर्वक्षराणीति पृथक् विभज्य प्रदर्श्यताम् ।

(१०) यत्र पञ्चाक्षरचरणात्मके पद्ये द्वितीयतृतीयवर्णौ लघू शेषवर्णा दीर्घास्तत् किन्नाम पद्यम् ?

(११) अक्षरपंक्तिच्छन्दोलक्षणं किम् ? तत्र चतुर्षु चरणेषु सर्वे वर्णाः कियन्तः कियती सर्वमात्रासंख्येति विलिख्यताम् ।

(१२) शशिवदनाछन्दोलक्षणपद्यं व्याख्यायताम् ?

(१३) यत्र षडक्षरपादवृत्ते आदितश्चतुष्टयं लघु, शेषवर्णद्वयं गुरु चेत् तत् किं नाम पद्यमिति निरूप्यताम्।
(१४) गीत्युपगीतिच्छन्दसोः को भेदः, अनयोश्च सर्वमात्रासंख्या कियतीति पृथक् वद।
(१५) मदलेखाछन्दोलक्षणं किं? तच्चरणान्ते च को गणः? इति लिख्यताम्।
(१६) यत्र सप्ताक्षरपदात्मकवृत्ते चतुर्थपञ्चमवर्णौ विना सर्वे गुरवस्तत् किन्नामवृत्तम्?।
(१७) श्लोके षष्ठं गुरुज्ञेयमित्यादिपद्यं व्याख्यायताम्? अस्मिन्पद्ये क्रियन्तो लघुवर्णाः सन्ति? श्लोकादौ किंनामको गणोऽस्तीति निरूप्यताम्।
(१८) यस्मिन्नष्टाक्षरपदात्मके वृत्ते द्वितीयतृतीयषष्ठसप्तमा वर्णाः लघवस्तत् किंनामकं छन्द इति कथ्यताम्!
(१९) माणवकाक्रीडच्छन्दोलक्षणपद्यं व्याख्यायताम्। तत्र चरणादौ को गणश्चरणान्ते च किंनामको गणः इति विलिख्य प्रदर्श्यताम्।
(२०) "भजामि तारिणीपदम्।" इति किं नाम्नश्छन्दसः पदम्?।
(२१) नगस्वरूपिणीछन्दोलक्षणं किमिति सोदाहरणं प्रदर्श्यताम्।
(२२) यत्राष्टाक्षरचरणवृत्ते समसंख्यकान्यक्षराणि गुरूणि विषमाक्षराणि च लघूनि तत् किं नाम पद्यम्?।
(२३) यद्यष्टाक्षरचरणात्मके वृत्ते सर्वे वर्णा गुरव एव तत् किंनाम वृत्तम्?।
(२४) विद्युन्मालाछन्दोलक्षणं किमिति तद्बोधकं पद्यं व्याख्यातम्।
(२५) यदि विद्युन्मालाच्छन्दसि विषमाक्षराणि लघूनि विहितानि भवेयुस्तदा तत् किं नाम पद्यम्?।
(२६) नगस्वरूपिणीछन्दसो विषमाक्षराणि यदि गुरूणि कृतानि स्युस्तदा किं संज्ञकं वृत्तं भवेत्?।
(२७) नगस्वरूपिणीछन्दश्चरणादौ किं नामको गणः?।
(२८) "श्री विश्वेशं नित्यं वन्दे"। इति किं नाम्नश्छन्दश्चरणः?।
(२९) यस्मिन् दशाक्षरवृत्ते द्वितीयतृतीयसप्तमाष्टमवर्णाः लघवस्तत् किंनाम वृत्तम्?
(३०) चम्पकमालाछन्दोलक्षणं किमिति सप्रामाणं लेख्यम्।

(३१) चम्पकमाला-मणिबन्धयोः को भेदः ? इति निरूप्यताम् ।
(३२) यदि चम्पकमालापदमन्त्यवर्णरहितं तदा किं नामकं छन्दः स्यादिति लिख्यताम् ।
(३३) मणिबन्धलक्षणपद्यं व्याख्यायताम् ।
(३४) मणिबन्धपदान्त्यवर्ण उपान्त्यवर्णौ विहितश्चेत् तदा किं नाम वृत्तम् ।
(३५) मणिबन्धपदे कति गणास्तेषां नामानि च क्रमेण विलिख्यत्ताम् ।
(३६) यद्येकादशाक्षरचरणवृत्ते षष्ठनवमौ वर्णौ लघू तदा किं नाम पद्यम् ।
(३७) शालिनीछन्दोलक्षणं किमिति विलिख्यताम् ।
(३८) "पायादेतद् भारतं वर्षमीशः ।" इति किंनाम्नश्छन्दसः पद्म् ।
(३९) दशाक्षरपादवृत्ते प्रथमचतुष्टयमन्तिमं चाक्षरं गुरु चेत् किंनाम पद्यम् ? ।
(४०) हंसीछन्दोलक्षणबोधकं पद्यं व्याख्यायताम् ।
(४१) दोधकलक्षणपद्यं व्याख्यायताम् । तत्र चतुर्षु चरणेषु कियन्ति लघ्वक्षराणि सन्ति ।
(४२) "पातु सदा भुवनं भुवनेशी" इति किंनाम्नश्छन्दसः पद्म् ।
(४३) इन्द्रवज्राछन्दोलक्षणं किमिति सप्रमाणं निरूप्यताम् ।
(४४) यदीन्द्रवज्राचरणादौ जगणस्य संनिवेसस्तदा किंनामवृत्तम् ।
(४५) इन्द्रवज्रोपेन्द्रवज्रयोः को भेदः ? उपेन्द्रवज्राचरणे लघुवर्णाः कियन्त इति लिख्यताम् ।
(४६) किं नामोपजातिच्छन्दस्तद्भेदाश्च कियन्तः ? ।
(४७) आख्यानकीविपरीताख्यानकीछन्दसोः को भेदः ?
(४८) "अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम् । वनाय पीतप्रतिबद्धवत्सां यशोधनो धेनुमृषेर्मुमोच ॥" इति किं नामच्छन्द इति सप्रमाणं निरूप्यताम् ।
(४९) एकादशाक्षरपदे द्वितीयचतुर्थपञ्चमषष्ठाष्टमदशमाक्षराणि लघूनि चेत् किं नाम पद्यम् ? ।
(५०) रथोद्धताच्छन्दसः किं लक्षणम् ? तच्चरणादौ किं नामको गणः ।
(५१) स्वागतारथोद्धतयोः को भेदः ? स्वगताचरणान्ते च को गणः ?
(५२) स्वागतावृत्ते नवमदशमाक्षरयोर्वैपरीत्ये किं नाम पद्यम् ?

(५३) एकादशाक्षरपदे सप्तमदशमवर्णौ लघू चेत् किं नाम वृत्तम् ?
(५४) वैश्वदेवीछन्दोलक्षणपद्यम् व्याख्यायताम् ।
(५५) "अम्बापादाब्जं सर्वदा सेवनीयम्" इति किं नाम वृत्तम् ?
(५६) द्वादशाक्षरपदे त्रिषण्नवद्वादशाक्षराणि गुरूणि चेत् किं नाम पद्यम् ?
(५७) "जगदम्बपदाम्बुजमेतु मनः" इति किं नामकं छन्दः ?
(५८) तोटकच्छन्दसः किं लक्षणं तद्बोधकपद्यमपि व्याख्यायताम् ।
(५९) "सदा विश्वनाथाङ्घ्रिकञ्जं भजेऽहम्" इति किं नामकं पद्यम् ।
(६०) यत्र प्रथमचतुर्थसप्तमदशमाक्षराणि लघूनि तद् द्वादशाक्षरपदं पद्यं किंनाम ? ।
(६१) भुजङ्गप्रयातच्छन्दोलक्षणं किमिति विलिख्यताम् ।
(६२) यत्र चतुर्थसप्तमदशमद्वादशाक्षराणि गुरूणि तत् किमाख्यं छन्दः ?
(६३) "शिवमहं मनसा च सदा भजे" इति किमभिधेयं वृत्तम् ?
(६४) द्रुतविलम्बितच्छन्दसो लक्षणं किं तच्चरणादौ च को गणः ।
(६५) प्रमिताक्षराछन्दश्चरणे पञ्चमाक्षरं लघु, षष्ठाक्षरं च गुरु विहितं चेत् कि नाम पद्यम् ? ।
(६६) "भज तारिणीचरणमेव सदा" इति किमभिधानवृत्तपदम् ? ।
(६७) हरिणीप्लुता-प्रमिताक्षरयोः को भेदः ? ।
(६८) "विधिविष्णुशिवार्च्यपदा सदा, भगवतीजगतीमभिरक्षतु ।" इति वृत्तार्धं किमाख्यस्य ? ।
(६९) वंशस्थेन्द्रवंशयोः को भेदः ? उभयोर्मेलनेन किं नाम वृत्तम् ? ।
(७०) "सुरेन्द्रसंसेव्यशिवः सदावतु" । इति किमाख्यवृत्तचरणः ।
(७१) "सरस्वती सर्वसुखार्थसिद्धिदा शर्वाद्यदेवार्च्यपदा सदावतु" इति वृत्तार्धं किमभिधानस्य च्छन्दसः ?
(७२) प्रभावती छन्दसो लक्षणं किम् ? इति सप्रमाणं लिख्यताम् ।
(७३) "दुर्गा स्मृता हरति जनस्य संकटम्" इति किमाख्यवृत्तस्य पदम् ।
(७४) "श्यामायाः पदसरसीरुहं भजामि" इति किमाख्यवृत्तपदम् ।
(७५) प्रहर्षिणीछन्दसो लक्षणं लिख्यताम् । तच्चरणादिगतगणस्य किं नाम ? ।

(७६) "दुर्गे स्मृता हरसि भीतिमशेषजन्तोः" इति किमभिधानपद्य-पदम् ।

(७७) वसन्ततिलकाछन्दोलक्षणबोधकं पद्यं व्याख्यायताम् ।

(७८) यत्र पञ्चदशाक्षरपदे सप्तमाष्टमनवमैकादशद्वादशचतुर्दशपञ्च-दशाक्षराणि गुरूणि तत् किमभिधानं वृत्तम् ?।

(७९) मालिनीछन्दोलक्षणं किमिति निरूप्यताम् ।

(८०) "विधिहरिहरसेव्या जानकी पातु लोकम्" इति किमभिधेय-वृत्तपदम ?।

(८१) हरिणीछन्दो लक्षणं व्याख्यायताम् । तत्रैकस्मिन् पदे कति गणाः कियत्यो मात्राश्चेति लिख्यताम् ।

(८२) "विरमत बुध योषित्संगात् सुखात् क्षणभङ्गुरात्" इति किं-नाम पद्यस्य पदम् ।

(८३) शिखरिणीछन्दो लक्षणं किम् ? तच्चरणादौ किंनामको गणः ।

(८४) "परं जाने मातस्त्वदनुशरणं क्लेशहरणम्" इति किमभिधान-वृत्तस्य पदम् ?।

(८५) यत्र द्वितीयषडष्टद्वादशचतुर्दशपञ्चदशसप्तदशाक्षराणि गुरूणि तत्सप्तदशाक्षरपदं किन्नाम पद्यम् ?।

(८६) पृथ्वीछन्दोलक्षणबोधकं पद्यं व्याख्यायताम् ।

(८७) "मुकुन्दमुखचन्द्रिरे चिरमिदं चकोरायताम्" इति किंनाम्नश्छ-न्दसः पदम् ?।

(८८) शार्दूलविक्रीडितछन्दोबोधकं पद्यं स्फुटं व्याख्यायताम् ।

(८९) "तां काशीं परिहृत्य हन्त विबुधैरन्यत्र किं स्थीयते" इति किम-भिधानस्य वृत्तस्य पदम् ?।

(९०) स्रग्धराछन्दोलक्षणं किमिति सोदाहरणं निरूप्यताम् ।

(९१) "भाग्येशो मूर्तिवर्ती सुरपतिगुरुणाऽऽलोकितो भूपवन्द्यः" इति किंनामपद्यस्य पदमिति प्रतिपाद्यताम् ।

(९२) श्रुतबोधे कयोः कयोश्छन्दसोर्मेलनेनोपजातिर्भवितुमर्हति ?।

(९३) मात्रा-वर्णवृत्तयोः को भेद इति स्फुटं प्रदर्श्यताम् ॥

इति प्रश्नाः । शिवम् ।





संख्या-गणनाम-नक्षत्र-राशि जन्मदिन जाति-मास-पक्ष-तिथि-वर्ण-देश पुर-पर्वत-मित्रादि-फल-स्त्री-मन्त्र-बोधकचक्रम्—

| सं | गण-नाम | नक्षत्र | राशि | जन्म वार | जाति | मास | पक्ष | ति. | वर्ण | देश | पुरी | पर्वत | मित्रादि | स्त्री | मन्त्र |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | मगण | रोहिणी | वृष | शनि | शूद्र | पौष | शुक्ल | १० | मिश्रित | जालंधर | स्वर्ग | शैलाधि | मित्र | कमला | ॐ मं-मगणाय नमः १ |
| २ | यगण | ज्येष्ठा | वृश्चिक | चन्द्र | वैश्य | आषाढ़ | शुक्ल | १२ | श्याम | कोशल | विपुला | वंशकैवर्त | दास | ब्रह्माणी | ॐ यं-यगणाय नमः २ |
| ३ | रगण | अश्विनी | मेष | रवि | क्षत्री | पौष | शुक्ल | ९ | रक्त | महेंद्र | मकरंद | मलयाचल | शत्रु | स्वधा | ॐ रं-रगणाय नमः ३ |
| ४ | सगण | पूर्वाभाद्रपदा | कुम्भ | बुध | वैश्य | कार्तिक | शुक्ल | ६ | नील | विडंवर | कंकेर | सेतुबन्ध | शत्रु | गारुडा | ॐ सं-सगणाय नमः ४ |
| ५ | तगण | रेवती | मीन | भौम | शूद्र | चैत्र | शुक्ल | ३ | धूम्र | कुन्तल | चम्पावती | कर्णगिरि | उदासीन | शून्य | ॐ तं-तगणाय नमः ५ |
| ६ | जगण | श्रवण | मकर | शुक्र | ब्राह्मण | मार्गशिर्ष | शुक्ल | ५ | रक्त | प्रवल | चित्रपुरी | उदयाचल | उदासीन | आतपा | ॐ जं-जगणाय नमः ६ |
| ७ | भगण | रेवती | मीन | गुरु | देवत | आश्विन | शुक्ल | १३ | श्वेत | शुक्ल | प्रभावतीपुरी | मिश्रगिरि | दास | शुक्ला | ॐ भं-भगणाय नमः ७ |
| ८ | नगण | अनुराधा | वृश्चिक | बुध | क्षत्री | ज्येष्ठ | शुक्ल | १५ | गौर | क्रौंच | काञ्चीपुरी | चन्द्रगिरि | मित्र | संजीवनी | ॐ नं-नगणाय नमः ८ |

